"बंध अभाव ते मोक्ष अनूप" मिथ्यात्वम्, अविरतिः, कषायः, योगः इत्यादयः कर्मबन्धाख्यस्य सामान्यहेतवः सन्ति, तेषां च विशेष-हेतवोऽपि प्रथमकर्मग्रन्थे निर्दिष्टाः वर्तन्ते । तत् अनुपेक्ष्य तादृशानां बन्धहेतूनां त्यागे आत्मा अनुक्रमेण अनुपमस्य मोक्षसुखस्य अधिकारी भवति । भावकर्मणि रागद्वेषौ मुख्यौ, तौ च कर्मबन्धाख्यस्य अतीव पोषकौ, आत्मा स्वरूपतः भ्रष्टः भूत्वा पौद्गलिकवस्तुषु लीनः भवति एवं कृते सति संसारसन्ततिः वर्द्धते । वटवृक्षस्य बीजवत् तदन्तो न समायाति । यदि रागद्वेषादयो मुख्याः पदार्था न स्युः तदा तदन्तः शीघ्रमेव भवति । अत एव तत्त्वज्ञानिन आत्मचिन्तकाः पुरुषाः रागद्वेषादीन् एव निर्मूलान् कर्तुं यतन्ते ।

"पर परिणति ममतादिक होय" स्वस्य आत्मस्वरूपं सुष्ठु ज्ञातुं शक्यं स्यात् तस्मिन् यदनन्तं सामर्थ्यं वर्तते यावत् तस्य दृढ-प्रतीतिः स्यात् तादृशानां सर्वज्ञवचनानां वा वीतरागस्य भगवतः परमतत्त्वबोधकप्रतिमायाः अन्तःस्थेन लक्ष्येन आलम्बनम् ग्राह्यञ्च तस्मिन्नेव स्वरूपे रतिः कर्तव्या इति परिणतिः आत्मनः अतीव हितकारिणी वर्तते, परन्तु तादृशी आत्मपरिणतिः परपौद्गलिकवस्तुषु अनादिना अनन्तेन कालेन अनुभूयमानायाः प्रीतेः परिहारेणैव जागर्ति आत्मार्थिभिः जनैः तादृशी पौद्गलिकवस्तुषु प्रीतिः त्याज्या आत्मनः च आभ्यन्तरेषु ज्ञानादि-गुणेषु प्रीतियोगम् कर्तुं प्रयतितव्यम् । यावत्कालपर्यन्तं जीवः निष्फलेषु परवस्तुषु ममताबुद्धिं धारयति तावत्कालपर्यन्तम् परमम् अतीव शारीरिक-दुःखं सहताम् तथापि तस्य आत्मनः हितकारिका सिद्धिर्न भवति परन्तु ममताबुद्धिर्यदि नश्यति तदा शीघ्रमेव तस्य सकलानि कर्माणि स्वात्मनः हितकारीणि भवन्ति अतः मुमुक्षुभिः जनैः परवस्तुभ्यो ममताबुद्धेः समुन्मूलनं कृत्वा आत्मनः स्वाभाविकेषु गुणेषु एव ममताबुद्धिः धर्तव्या इत्येवोचितं कर्तव्यमस्ति ।

"स्वपर भाव ज्ञान कर हेय" स्वं—आत्मद्रव्यं परं—आत्मव्यतिरिक्तम् इति तदर्थः तेषां द्रव्याणां यथार्थं ज्ञानं स्यात् तावत्कालपर्यन्तं

गुरुगम्यः अभ्यासः कर्तव्यः उचितः अस्ति। आत्मा धर्मास्तिकायः अधर्मास्तिकायः आकाशास्तिकायः पुद्गलः कालश्च इति षड् द्रव्याणि तानि च गुणपर्याययुक्तानि भवन्ति। तदीयः विशेषाधिकारः नवतत्त्वादिकेभ्यः ग्रन्थेभ्यः अवगन्तव्यः। आत्मा चैतन्ययुक्तम् चेतनं द्रव्यम् अस्ति, तद्भिन्नानि च सर्वाणि चैतन्यरहितानि जडानि सन्ति, तानि गुणपर्याययुक्तानि सुष्ठु ज्ञात्वा आत्मार्थम् अनुपयुक्तेभ्यः पुद्गलादिकेभ्यः परद्रव्येभ्यः निवृत्तिः धार्या पुनः आत्मनः एव गुणेषु निश्चयेन प्रवृत्तिः कार्या। ज्ञेयानि सर्वाणि यानि द्रव्याणि स्युः तेषु त्याज्यानां त्यागः स्वीकरणीयानां स्वीकारः इत्येव सारविवेकस्य फलम् अस्ति परन्तु शुकवत् केवलमुखपाठेन अर्थात् अर्थानवबोधनपुरःसरं केवलशब्दपाठेन आत्मनः किमपि हितं न भवति ॥

"उपादेय आतमगुणवृन्द जाणो भविक महासुख कन्द" आत्मनः अनन्तानां गुणानां समुदाय एव आराधनयोग्यः वर्तते स एव आत्मनः अत्यन्तोपकारी अस्ति। स्वगुणसमुदायं समुपेक्ष्य च आत्मगुणानां विरोधिनः दुर्गुणान् समादृत्य आत्मैव आत्मनः शत्रुर्भवति अत एव स संसार-चक्रे अनन्तकालपर्यन्तं परिभ्रमति एतादृश्या महत्याः क्लेशकारिण्या गंभीरायाश्च्युतेः प्रक्षालनेन विना न तदुद्धारो विद्यते च्युतिप्रक्षालनेन विना सः आत्मगतानामपि अनन्तानां सुखानाम् आस्वादं कर्तुं न शक्तिमान् भवेत् अनन्तकालात् स्वस्थितां च्युतिं प्रक्षाल्य स्वदोषान् एव उन्मूलयितुं यतेतेत्यावश्यकम् येन आत्मनः सत्तामुपेत्य विद्यमानो गुणः अनायासेन जागृतः सन् प्रकाशितो भवेत्।

"परमबोधमिथ्यादृगरोध" मिथ्यादृग् मिथ्यात्वं तन्नाम विपर्ययः—विपरीतवासना तत्त्वे अतत्त्वमतिः, अतत्त्वे तत्त्वमतिः, गुणे दोषदृष्टिः, दोषे गुणमतिः, हिते अहितबुद्धिः, अहिते हितमतिः, सुदेवे कुदेवमतिः, कुदेवे सुदेवमतिः, सुगुरौ कुगुरुमतिः, कुगुरौ सुगुरुमतिः, सुधर्मे कुधर्मबुद्धिः कुधर्मे सुधर्ममतिः, ईदृशी मिथ्या मतिः एव मिथ्यात्वं, तन्निरोध एव परमो बोध उच्यते, उपर्युक्तं मिथ्यात्वम् अनादिना कुसंगयोगेन जातं, तस्य निरोधार्थम् आत्मार्थिभिः जनैः तदवरोद्धुं सुसंगार्थे सावधानैः भवितव्यम्। समर्थस्य ज्ञानिनः पुरुषस्य पक्षपातरहिते वचने सम्पूर्णेन विश्वासेन विना अनादिः

अनन्तः रोगः विनष्टो नैव भवेत् एतस्य नाशमन्तरा अनन्तं बाधारहितं क्षयरहितं सुखमपि दुर्लभमिति सारः ।

" मिथ्यादृगदुःखहेतअबोध " यतः मिथ्यात्वजन्यम् अनन्तं दुःखं जायते तदेव अज्ञानं मिथ्यात्वं हि महत् शूलं महत् कष्टम् महद्विषम् महाव्याधिः इत्यादिरूपम् एतदीयां महतीं व्यथां यतनोन्मूलयति तत् न ज्ञानम् अपि तु अज्ञानं तत् ज्ञातव्यम् । ये जनाः पूर्वोक्तया मिथ्यामत्या परिपूर्णाः अथ च मिथ्यावासनया परिपूर्णाः ते दीनाः अज्ञानिनः परेषां मिथ्यात्वं कथं दूरीकर्तुं समर्थाः भवेयुः, ये स्वयमेव भवोदधौ निमज्जन्तस्ते अन्यान् उत्तारयितुं कथं शक्ताः स्युः, येषां सम्यग् दर्शनं न जातं ते अन्यान् अर्थिनो जनान् दर्शनयुक्तान् कथं करिष्यन्ति, ये सदैव निर्धना दु खिनश्च ते परान् सुखिनः सधनान् कर्तुं कथं समर्थाः भवेयुः, अत एव मिथ्याभूतां वासनां दूरीकर्तुम् अन्तःकरणेन अभिलाषवन्तो भूत्वा समर्थानां निष्पक्षपातिनां साधूनां विदुषां वा हितशिक्षां हृदये कृत्वा तन्मनने तदाचारविचारे यथाशक्ति यत्नं विदध्युः, अयमेव आत्मनः अत्युपकारको मार्गः, एवञ्च एतदेव उपादेयं वस्तु ।

" आत्महित चिन्ता सुविवेक " यस्मिन् आत्मनः हितकरं चिन्तनं भवति वा येन आत्मनः कल्याणकरं चिन्तनं हृदये सदा स्यात स एव सत्यो विवेकः कथ्यते अन्यो विवेकस्तु केवलः मिथ्याभूतोऽस्ति । को नाम आत्मा, किन्नाम तस्य स्वरूपम् , तस्य कियती शक्तिः, सः कथं गुप्तः, तत्र विघ्नाघायकं किम् ?, तद्विघ्नं कथं दूरीकर्तव्यम् , तस्य साधनानि कानि कानि, तेषां साधनानामुपयोगः कथं कार्यः, इदं मनुष्यजन्म कियद्-मूल्यम् ?, तज्जन्म निरर्थकं व्यतीतं भवति इत्यादि आत्मसम्बन्धिन्यै चिन्तायै जागृतिः विशेषतः अतीव उपयुक्ताः, येषाम् आत्मनोऽनुभवो जातः तादृशानां सतां जनानां सेवाभक्तिं बहुमानेन कर्तुम् अस्माभिः उद्यतैः भवितव्यम् , स्वहिते कार्ये अकर्तव्यबुद्धया जीवेन बहुलं दुःखमनुभूतम्, अथ चाग्रेऽपि बहुदुःखं सोढव्यमस्ति, अथ अतः बहुकालपर्यन्तम् स्वस्य हितानि साधनानि अनुपेक्ष्य केनापि प्रकारेण सद्यः प्रयासेन प्रेम्णा च सतां

संगतिं सम्यग् अनुभूय स्वहितार्थं बहु प्रयतितव्यम् , तत्र उपेक्षाकरणं तु सुवर्णसमयस्य नाशरूपमहितमेव वर्तते, हितार्थं जीवस्य आभ्यन्तर-स्वरूपः सुविवेकः जागृतो भवेत् इति अतीव दुर्लभः सः अस्ति सम्यक्तया सुविवेचनीयम् ।

विवेकेन विना मुक्तिं स्वर्गं न लभते नरः कश्यपस्य सुते दैत्ये आदित्ये पश्य भिन्नताम् ॥

" तास विमुख जडता अविवेक " ध्येयस्य आत्मतत्वस्य त्यागः, केवलं जडेषु पौद्गलिकेषु वस्तुषु प्रीतिः उत च तेषां प्राप्त्यर्थम् उपायचिन्तनम् , चतुर्विधाहारसेवनम् भोगादिकमेव अस्यां जगत्यां सारभूतं वस्तु वर्तते इति, एतादृशाः अज्ञानमूलकाः कुत्सिताः विचारा एव अविवेकनामधेयाः, एतादृशेन अविवेकेनैव मिथ्याभूता वासना प्रतिदिनं वर्द्धते, अतः जीवः संसारे परिभ्रमति । जन्मस्वरूपे जरात्मके मृत्युस्वरूपे अधिकस्वरूपे व्याधिस्वरूपे उपाधिस्वरूपे संयोगैः वियोगैः जन्ये अनन्तदुःखात्मके दावाग्नौ पतितः सन् ग्रस्तः सन् भवति । एवं सति तथापि मोहमदिरायाः प्रबलेन वेगविकारेण सः आत्मानं सुखिनं मन्यते वा तादृशं कल्पितं मिथ्याभूतं क्षणिकं विनाशि सुखम् अभिलषति । एतादृशः अयोग्यो जीवः कल्याणस्य उपभोक्ता कथं भवेत् ? । अविवेकिनं कोऽपि न वरति—

निर्विवेकं नरं नारी प्रायोऽन्यापि न कांक्षति, किं पुनः मुक्तिरूपाश्रीः पुरुषोत्तमवल्लभा ॥

परभवसाधक चतुर कहावें, मूरख ते जे बन्ध वधावें, त्यागी अचल राजपद पावे, जे लोभी ते रंक कहावे ॥ ९ ॥

चतुरोऽन्यभवसाधकः स मूढो हि ददाति बन्धने स्वं यः, त्यागी मुक्तिपदानां लब्धा लोभी धनस्य स दीनः ॥

उत्तम गुणरागी गुणवन्त, जे नर लहत भवोदधि अंत, योगी जस ममता रति नहि, मन इन्द्रि जीते ते जति ॥ १० ॥

श्रेष्ठं गुणं दर्शयितुं गुणवान् सयत्नः संसारसिन्धुतरणे सफलः स एव ।
योगी स एव नहि यस्य ममत्वक्लेशः चित्तन्द्रियाणि जितवान् स यतिर्विशेषः ॥

समतारस सागर सो सन्त, तजत मान ते पुरुष महंत, शुरवीर जे कन्दर्प वारे कायर काम आणा सिर धारे ॥ ११ ॥

सन्तः समत्वरससागरतुल्यचित्ताः, मानं त्यजन् भवति भव्यजनो महान्तः ।
कन्दर्पदर्पदलने पटुरस्ति वीरः, सैवास्ति कातरजनः खलु यो हि कामी ॥

अविवेकी नर पशुसमान मानव जस घट आतम ज्ञान, दिव्यदृष्टिधारी जिनदेव करतां तास इन्द्रादिक सेव ॥ १२ ॥

यो निर्विवेक इह सैव पशुः पृथिव्याम्, आत्मज्ञ एव भुवि मानवनामधारी ।
देवो जिनो जगति दिव्यसुदृष्टिधारी, यस्यांघ्रिसेवनपराः वरुणेन्द्रसूर्याः ॥

ब्राह्मण ते जे ब्रह्म पिछाणे क्षत्री कर्म रिपु वश आणे, वैश्य हाणि वृद्धि ते लखे शूद्र भक्ष अभक्ष जे भखे ॥ १३ ॥

ब्रह्मज्ञ एव भुवि भूसुरनामधारी, सः क्षत्रियः सकलकर्मरिपुवशी स्यात् ।
हानिञ्च वृद्धिमधिगच्छति यः स वैश्यः, अश्नाति सर्वमविचार्य विचार्य शूद्रः ॥

अथिररूप जाणो संसार थिरयेक जिनधर्म हितकार, इन्द्रि सुख छिल्लर जल जाणो श्रवण अतिन्द्रि अगाध वखाणो ॥

जानीहि संशयमृते जगदस्थिरञ्च, धर्मः स्थिरो हितकरो जिनदेवभर्तुः,
तच्छिरं तु सुखमिन्द्रियजं यदस्ति निर्हेतुकं सुखमगाधमहं वदामि ॥

इच्छारोधन तप मनोहार जप उत्तम जगमें नवकार, संयम आतम स्थिरताभाव भवसागर तरवा को नाव ॥ १५ ॥

इच्छावरोध इह मे मनसा तपोऽस्ति, अत्युत्तमो हि नवकारजपः समेषु ।
आत्मस्थिरत्वमिह संयमनामधेयं, नौकासमानमुपकारि भवोदधौ यत् ॥

छती वनित गोपवे ते चोर शिवसाधक ते साध किशोर, अति दुर्जय मनकी गति जोय अधिक कपट नारीमें होय ॥

तच्छक्तिगोपनजन एव प्रसिद्धचौरः, साधुः स एव शिवसाधनतत्परो यः ।
तद् र्जयं स्वमनसो गमनं प्रसिद्धं, स्त्रीष्वेव भूरि कपटः न पुंसि ॥

" परभवसाधक चतुर कहावे " बालकः स्वभावत एव स्तनपानाय प्रवर्तते इति वासनैव परभव साधयति तादृशैरनेकैः साधकैः बाधकैः प्रमाणैः परभवं ज्ञात्वा अस्य क्षणिकस्य देहस्य नाशानन्तरं परभवोऽस्माकं कृते अस्ति अतः तदर्थं आदानेव शुभैः साधनैः सह सन्नद्धो भवेत् स एव ज्ञानी कुशलः ज्ञेयः कुतः स स्वीयां कुशलतां स्वहिते उपयोगं करोति उत केचिन्मुग्धाः जनाः लोकरञ्जनाय स्वकीयां कुशलतां प्रदर्शयन्ति परन्तु सः कुशलतायाः सदुपयोगः नास्ति अपि तु दुरुपयोगः सः वर्तते ।

" मूरख ते जे बन्ध बढावे " मिथ्यात्वम् अविरतिः कषायः योगः दुष्प्रणिधानं इत्यादिकैः दोषैः जीवः विविधं कर्मणा बन्धनं कृत्वा संसारे परिभ्रमति तान् आत्मगुणानां विरोधिनः दोषान् सेवमानश्च आत्मनो गुणानां हन्ता आत्मनो द्रोही मूर्ख उच्यते बुधैः बुद्धिर्यदि अस्ति तर्हि तत्त्वातत्त्वविवेकः कार्यं एतद् वचनं अनादृत्य दुरुपयोगं कुर्वन् दुर्बुद्धिः विवेकहीनः मूर्खः उच्यते । दुर्लभं मानुषं देहं लब्ध्वा वीतरागेण प्रणीता व्रतनियमाः सेव्याः इति महत् वाक्यम् अनादृत्य क्षुद्रे क्षणिके विषयसुखे आसक्तिः सा महती मूढतामेव अभिव्यनक्ति श्रियं लब्ध्वा पात्रेभ्यः

प्रदानेन तस्याः आनन्दः ग्राह्यः। अस्य महतो वचनस्य अर्थं विस्मृत्य अनुचितेषु व्यसनेषु तस्याः दुरुपयोगः, कार्पण्येन वा तस्याः उपरि ममत्वं, तेन च सदुपयोगो न स्यात् तर्हि मूर्खत्वमेव, नान्यत् किमपि। उपर्युक्तानि महान्त्यपि वाक्यानि सारभूतानि वर्तन्ते ये तेषां सारं ज्ञात्वा तदनुसारेण सम्यक् आचरन्ति ते चिरं न पर्यटन्ति। न त्वस्य रहस्यं ज्ञात्वा तत्त्वे अविचलां श्रद्धां धृत्वा ये तत्त्वे रतिं कुर्वन्ति, तदर्थं अत्र जडत्वं अत्र चैतन्यमिति सुष्ठु अवगम्य स्वीये चेतनद्रव्ये अन्तः स्थिताम् अपरिमितां शक्तिं ज्ञात्वा यः स्वीये आत्मनि अन्तः स्थिताम् अपरिमितां शक्तिं साक्षात्कर्तुं पवित्रया बुद्ध्या वीतरागवचनानुसारेण प्रयतते सः भाग्यवान् संसारे अविरतभ्रमणं नैव करोति अपितु व्युत्क्रमगेन स्वस्य मत्या यशोलिप्सया गतानुगतिकभावेन वा अन्यस्य कस्यचन फलस्य आशया दानादिकां धर्मक्रियां करोति सः मूर्खः कदापि आत्मनः हितचिन्तको न भवति, अतः मुमुक्षवः जनाः यत् किञ्चिदपि धर्मानुष्ठानं कुर्युः तत् केवलं स्वस्य हिताय कथं तादृश। पवित्रेण लक्ष्येन आत्मा निर्मलः भवति विरुद्धेन लक्ष्येन च मलिनः भवति। इति सुविचार्य विवेकवत्या मत्या स्वस्य हितम् अभिलषणीयम्। मूर्खलक्षणान्तरम्—

**परकाव्यैः कवित्वं यद्गर्वो याचितभूषणैः, या च याचनया वृत्तिस्तदेतन्मूर्खलक्षणम् ॥**

"त्यागी अचल राजपद पावे" यः साधुः पुरुषः सद्विवेकद्वारा तत्त्वातत्त्वनिश्चयं कृत्वा त्याज्यवस्तु परित्यज्य ग्राह्यं गृह्णाति सः अन्तकाले स्थिरं मोक्षपदं प्राप्नोति। येषां कारणानां सेवया जीवः व्यर्थमेव भवे परिभ्रमति, अनन्तानि च दुःखानि सहते, तानि सर्वाणि कारणानि त्याज्यानि। येषां पुनः कारणानां सेवया जीवः कर्मबन्धनान्मुक्तः भवति अन्तकाले परमं पदञ्चाधिगच्छति तानि सेव्यानि। अर्थात् सर्वाणि पापस्थानानि त्याज्यानि। एवं वीतरागेण सर्वज्ञेन कथितानि गुणस्थानानि सेव्यानि सन्ति, इति विवेकेन वैराग्यं सेवमानः अविनाशि सुखं भुङ्क्ते। स्वीयेन स्वीयेन अधिकारेण अनुक्रमतः उन्नतेः पदं जिगमिषुः सुखेन स्वीयाम् उन्नतिं प्राप्त्वा अविनाशि अचलं सर्वबाधाविनिर्मुक्तं सुखं प्राप्नोति।

कर्णस्त्वचं शिविर्मांसं जीवं जीमूतवाहनः, ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥

" जे लोभी ते रंक कहावे " भोगस्य बहु सामग्र्यां सत्यामपि यः लोभान्धः अधिकं अधिकं अभिलषति स एव खलु दीनः, यथा-काले प्राप्तेषु वस्तुषु सन्तुष्टः सन् परभवस्य साधनाय यतते सः धीमान् सुखी अस्ति । ' न तृष्णायाः परो व्याधि ' न सन्तोषात्परं सुखमि' ति वाक्यं पूर्वोक्तमर्थं द्रढयति । अत एव साधवः सन्तोषवृत्तिमवलम्ब्य सुखिनो भवन्ति, तथाऽस्माभिरपि यतितव्यम् । तदुक्तं हितोपदेशे—

लोभात् क्रोधः प्रभवति, लोभात् कामश्च जायते । लोभात् मोहश्च नाशश्च, लोभः पापस्य कारणम् ॥

" उत्तम गुणरागी गुणवन्त, जे नर लहत भवोदधि अन्त " यः स्वयं गुणी सन् अपि अन्यगुणिजनेषु प्रेम धत्ते स एव सद्यः संसारं तरति; ये गुणिनः सन्तोऽपि परकीयान् गुणान् असहमानाः तेषु स्वाभाविकं प्रेम न धारयन्ति किन्तु द्वेषं, ईर्ष्यां, मत्सरादिकं न धारयन्ति ते स्वीयेभ्यो गुणेभ्यो भ्रष्टाः सन्तः भवाटव्यां पर्यटन्ति, अर्थात् द्वेषादिकेन दोषेण कियन्तोऽपि सद्गुणाः निर्वीर्याः निष्फलाश्च भवन्ति, उत्तमेन गुणानुरागेण गुणहीनोऽपि उन्नतिमधिगच्छति। श्रीमता यशोविजयोपाध्यायेन अष्टादशपापस्थानानां स्वाध्याये ( सज्झाय इति भाषायां ) द्वेषस्य प्रकरणे द्वेषेण जायमाना महती हानिः; गुणानुरागेण जायमाना वृद्धिश्च सुष्टु निर्दिष्टे स्तः । अतः तत्सम्बन्धि विशेषतो मननं विधाय कृष्णवासुदेववत् गुणग्राही भवितुं यतनीयमिति ।

॥ १२ ॥ " योगी जस ममता नहि रति "—यस्य लेशमात्रमपि परपौद्गलेषु ममता नास्ति स एव योगी अस्ति । उत्तमेन योगबलेन येन ममता प्रज्वालिता स एव जनः मोक्षस्य अधिकारी भवितुमर्हति । ममता मूर्च्छेत्यादिरेव परिग्रहः । परिग्रहणोन्मत्तानां जीवानां तु दुर्दशा एव भवति; तत्रापि यः साधोः वेषं धारयति तस्य सर्वत्र महान् उपहासः भवति, स तु साधो वेषेण जगद् वञ्चयति, अर्थात् धर्मधूर्तः भूत्वा विश्वं

प्रतारयति च, सर्वज्ञस्य भगवतः आज्ञामुल्लंघयति । सर्वज्ञेन भगवता साधोः द्रव्येण भावेन च निर्ग्रन्थत्वमुपदिष्टम् । द्रव्येण सुवर्णादिपरिहारः, भावेन च मूर्च्छादिपरिहारः प्रभुणा उपदिष्टः । तादृशीं प्रतिज्ञां कृत्वापि पुनः प्रतिज्ञाया भ्रंशं कृत्वा ममताधारणमतीवानुचितम् । उक्तञ्च—

" ममता थिर है, सुख शाकिनी निरममता अनुकूल । ममता शिव प्रतिकूल है, निरममता अनुकूल ॥ "

**सुखहन्त्री स्थिरा ममता, निर्ममत्वं परं सुखम् । शिवनाशि ममत्वं हि, निर्ममत्वं सदा शिवम् ॥**

" मन इन्द्री जीते ते जति " मनः इन्द्रियवर्गं च विषयेभ्यः व्यावृत्तं कृत्वा वीतरागेण परमात्मना उपदिष्टाः दश शिक्षाः सुष्ठु ज्ञात्वा ये आराधयन्ति ते एव सुसाधवः सन्ति, यदि एतद्विपरीतं अर्थात् मनः इन्द्रियादीन् च विषयासक्तान् कृत्वा स्वेच्छया आज्ञाविरोधेन प्रयतन्ते ये ते तु यतेर्नाम कलंकितमेव कुर्वन्ति इति निश्चितम् । सर्वज्ञेन भगवता उत्तमाः दश शिक्षाः स्वहितायोपदिष्टा ताः अधो लिखिताः वर्तन्ते—१ क्षमां धृत्वा सहनशीलो भवितव्यः, २ मृदुतां समादृत्य सद्गुणिनि नम्रता धारणीया, ३ ऋजुतां समादृत्य निष्कलंकिता वृत्तिः, ४ लोभं परित्यज्य सन्तोषः सेवनीयः, ५ यथाशक्ति बाह्येन आभ्यन्तरेण च तपसा आत्मनो विशुद्धिः करणीया, ६ संयमेन आत्मनो निग्रहः सर्वान् च जीवान् आत्मतुल्यान् मत्वा केषामपि अपकारः न कर्तव्यः, ७ हितं मनोहारि च सत्यमेव वचनं वक्तव्यं, ८ अन्यायाचरणं परित्यज्य निर्मलेन अन्तःकरणेन व्यवहर्तव्यम्, ९ ममतादिकं परिग्रहं—अनर्थकरं समालोच्य निःस्पृहत्वं समाचरणीयम्, १० मनसो वचसो देहस्य च शुचितां सुष्ठु धृत्वा विषय-भोगेभ्यो विरक्तिः । उक्ता दश महतीः शिक्षाः यथार्थरीत्या सेवमानाः यतयो जगतः कृते महाशीर्वादात्मकाः सन्ति, स्वेच्छया तम् परमं शुचिमार्गं समुल्लंघ्य विहरन्तः यतयः संसारस्य कृते शापस्वरूपाः एव सन्तीति सारः ।

" समतारस सायर सो सन्त " रागेण द्वेषेण मोहेन जायमानान् दोषाधिराजममतादिविकारान् परित्यज्य ये सर्वदा शमरसे एव

निमज्जन्ति त एव खलु साधवः । तादृशः समदर्शिनः साधवः एव विश्ववन्द्याः सन्ति । जगति ईदृक् किमपि वस्तु नास्ति यत् उपमीयते । अतः तादृक्षाः साधुजनाः उपमानातीतत्वेन निगद्यते । उक्तं च ज्ञानसागरे—'येषां समतारसः स्वयंभूरमणसमुद्रेण सह स्पर्धते सदैव च वर्द्धते एषां मुनीशानां कृते उपमानभूतं किमपि चराचरेऽस्मिन् महति संसारे नास्ति' तथापि सूर्य्येण सह सोमेन सह सागरेण सह या उपमा सा एकदेशिन्युपमा ज्ञेया न पूर्णोपमा सा इति ॥

**सङ्गः सर्वात्मना त्याज्यः, स चेत् त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सन्तः संगस्य भेषजम् ॥**

"तजत मान ते पुरुष महंत" यः मानः सामान्यतो जीवेषु दृश्यते, यतः जीवाः बहुधा सन्त्रस्ताः भवन्ति, पुनः आयतो नरकगामिनः भवन्ति, तद् दुःखदायिनं मानं त्यजन्ति ये ते एव महान्तः पुरुषाः विज्ञेयाः। अभिमानस्य त्यागे निमित्तं नम्रता एव वर्तते । यावत्कालपर्यन्तं वयम् अपूर्णाः तावत् कालं अभिमानं कथं करवाम ? पूर्णानामभिमानस्य अपेक्षैव नास्ति। अर्थात् पूर्णानामपूर्णानामभिमानस्य स्थानमेव नास्ति तत्रापि ये तत्त्वतः पूर्णाः ते कदाचिदपि न अभिमानिनः किन्तु अभिमानं परित्यज्य नम्रतागुणेनैव परिपूर्णाः भवन्ति ये अपूर्णाः तथापि मिथ्याभिमानभृतेन रूपेण सन्ति ते तु कदापि पूर्णाः न भवन्ति किन्तु स्वाधीनं गुणगणं परायत्तं पराधीनं दोषगणं स्वायत्तं कुर्वन्ति अतः सर्वश्रेष्ठः पन्थाः अयमेवास्ति यदा गुणा वृद्धिं गताः स्युः तदा नम्रता अपि वृद्धिं गता स्यात् यदा नम्रता वर्द्धमाना तदा गुणवृद्धौ शीघ्रतरा गतिः तत्र यदा क्षयस्तदा गुणवृद्धौ अपि क्षय एव एवं यत्र लघुता तत्र प्रभुता यत्र प्रभुता तत्र प्रभुः—ईश्वरः दूरे भवति इति नियमः अत एव रावणदुर्योधनादयो विनष्टाः, रामयुधिष्ठिरादयोऽभ्युदयसम्पन्नाः जाताः । माने बहवः दुर्गुणास्तस्मात् सः त्याज्यः एव ।

"शूरवीर ते कन्दर्प वारे" ये खलु कन्दर्पविकार रहिता ते एव शूराः ये च कन्दर्पस्य वशंगताः सन्तः स्वस्य परस्य च हितं विस्मरन्ति ते

भीरवः वर्त्तन्ते। केचन रणांगणे लक्ष्यार्बुदसंख्यकान् शूरान् घ्नन्ति तादृशोऽपि सुभटाः वर्तन्ते परन्तु तेऽपि कस्याश्चन अबलायाः नेत्रकटाक्षं सोढुं सर्वथा असमर्थाः भवन्ति, अबलायाः सन्निधौ अतीव भीरवो भवन्ति। कन्दर्पविकारेण हतप्रज्ञाः सन्तः अन्धवत् कामान्धाः भवन्तः मर्यादां परित्यज्य इतस्ततः पर्यटन्ति, यत्र तत्र बहुधा अपमानिनः भर्त्सिताश्च भवन्ति। अन्तकाले मलिनया वासनया मृत्वा नीचगतौ उत्पद्यन्ते। अतः प्रत्येकैः मानवैः नारीभिश्च कामविकारेभ्यः निस्पृहाः अर्थात् कामविकारं वशं कृत्वा स्वमर्यादां निष्कलंकयितुं सावधानैः भवितव्यम्। कामविकारेण रहितानामेव पुरुषाणां शीलं रत्नमिव स्फुरति। शीलरत्नमेव मनुष्यजातीनां परमं भूषणम्। विदुषोक्तमत्र—

**नास्त्यहिंसासमो धर्मो, न सन्तोषसमं व्रतम्, न सत्यसदृशं शौचं, शीलतुल्यं न मण्डनम्॥**

सन्तोषवन्त एव पुरुषाः शीलरत्नं लब्धुं शक्यन्ति। पूर्वस्मिन् काले सन्तुष्टाः बहुलाः स्त्रियः पुरुषाः आसन् यन्नामानि प्रातःकाले अद्यावधि गीयन्ते धार्मिकैः। तादृक्षाणां जीवानामनुकरणं कृत्वा मनसा वचसा वचसा देहेन च विशिष्टरत्नं रक्षितुं विषयवासनामुन्मूलयितुं च आत्मार्थिभिः साधुभिः यतितव्यम्।

"कायर काम आणा शिर धारे" विषयविकारस्य वशतां गताः विवेकरत्नं विस्मृत्य स्वीयायाः मर्यादायाः विमुखोभवन्ति ते एव भीरवः। ईदृक्षाः जनाः स्वस्य परस्य च जीवनं दुःखमयं कुर्वन्ति। स्वयमेव कामान्धाः भूत्वा स्वस्य मर्यादां परित्यजन्ति, अन्यानपि तन्मार्गगामिनः विधाय उभावपि विपथे गच्छतः। कामान्धा माता स्वपतिं स्वशत्रुमिव मत्वा पुत्रश्चापि प्रियं तिरस्करोति। आत्मनः कल्पिताय स्वार्थाय तयोः अमोघान् प्राणानपि संहरति, येनकेन चापि मर्यादारहितेन जारेण सार्कं रमते। एवमेव कामान्धः पुत्रः स्वीयां कुलमर्यादां परित्यज्य मात्रा सह भगिन्या सह पुत्र्या सह व्यभिचारं कुर्वन् न बिभेति। एतदर्थं सः भीरुः उच्यते यत् स्वीयेन प्रबलेन दोषेण आयतौ आगामिनोः आपदः दूरी-

कर्तुं कमपि यत्नं पुरुषार्थं नैव करोति । एतादृक्षाणां कामान्धपुरुषाणां नारीणाञ्च प्रबलेन मन्मथविकारेण जगति अनेकविधाः अनर्थाः भवितुं गर्हन्ति, एतादृशैः अनर्थकारिभिः जन्मान्तरे नरकसम्बन्धीनि बहुविधानि त्रासदायकानि दुःखानि भोक्तव्यानि भवन्ति । तथापि मनुष्यजन्मनि स्वस्य परस्य च हितार्थं प्राप्तः शोभनावसरः पुनः हस्तगतः न भवति । कदापि बहोः कालात् बहुभिः कष्टैः मनुष्यजन्म लभेत तथापि महोक्षवत् यथेष्टम् अनुभूतानां विषयाणां भोगेन पुष्टा विषयवासना उत्थाय तथैव जीवः विषयविकारेषु आसक्तो भवति अतः पण्डिताः उत्तमैः साधनैः विषयपाशेभ्यः मुक्ताः सन्तः निर्विकारतां प्राप्तुं प्रबलेन पुरुषार्थेन यतेरन् ॥

" अविवेकी नर पशु समान " यस्मिन् विवेकः नास्ति तथा विवेकं प्राप्तुं न यतते सः मनुष्यः सन् पशुः इव गण्यते । यतः—आहार—भय—मैथुन—परिग्रह—रूपसंज्ञाचतुष्कं तु उभयोः समानं भवति । तदुक्तं हितोपदेशे—

**आहार-निद्रा-भय-मैथुनञ्च, सामान्यमेतत्पशुभिर्नराणाम् । ज्ञानं हि तेषामधिकं विशिष्टं, ज्ञानेन हीनाः पशुभिः समानाः ॥**

एवञ्च कृत्यमकृत्यं हितमहितं भक्ष्यमभक्ष्यं पेयमपेयं ग्राह्यमग्राह्यमित्यादिषु गुणान् दोषांश्च सम्यग् ज्ञात्वा विवेको यदि जागृतः स्यात् तदैव मनुष्यजन्मनः साफल्यं वर्तते नान्यथा । पशौ प्रायः तथा विज्ञानं न भवति मनुष्यो यदि वाञ्छेत् तदा बुद्धिबलेन तत्त्वमतत्त्वञ्च विचार्य निश्चित्य अतत्त्वं परित्यज्य तत्त्वं स्वीकुर्यात् । बुद्धिबले सति यः उपरि निर्दिष्टेन प्रकारेण न यतते किन्तु विविधाः विषयवासनाः पोषयितुं यतते तथा दुर्लभमानुषदेहस्य श्रियाः सरस्वत्याः च दुरुपयोगं विधत्ते तदा प्राप्ताभिः शुभाभिः सामग्रीभिः विहीनो भवति । एवं तादृश्यः शुभसामग्र्यः अन्यजन्मनि कठिनेन श्रमसाधनेनापि न प्राप्तुं शक्नोति । अतः उत्तमाः स्त्रियः पुरुषाः च मोहम्, अज्ञानम्, अविवेकम् च त्यक्त्वा यथा भवेत् तथा शीघ्रं सत्संगेन निर्मलं ज्ञानं विवेकं प्राप्तुं सततं प्रयतेरन् येन इदं मानुषं जन्म सार्थकं स्यात् ।

" मानव जस घट आतम ज्ञान " येषां हृदये विवेकः वर्तते त एव खलु मनुष्याः तेषामेव जन्म सफलम् । आत्मज्ञानेन स्वस्य परस्य च चेतनस्य जडस्य त्याज्यस्य अत्याज्यस्य कृत्यस्य अकृत्यस्य हिताहितस्य भक्ष्याभक्ष्यस्य पेयापेयस्य गुणागुणस्य निर्णयो भवति, इति तत्वनिर्णये जाते स्वस्य परस्य च हितं सुसाध्यं भवति । तत्र स्थिरतया साध्यसिद्धिर्भवति आत्महितसिद्धये आत्मज्ञानं कियदुपयुक्तम् इत्यादिकमपि एतेन ज्ञातं भवति । आत्मनि अलौकिकस्य सामर्थ्यस्य प्रदर्शकम् आत्मज्ञानमेव । अथ दृढायां आत्मश्रद्धायां जातायां सत्यां आत्मनः अलौकिकां शक्तिं अभिव्यक्तीकर्तुं निःशंकया साधनानि सेव्यानि भवन्ति अनुक्रमेण आत्मनि रमणतया अचलं मोक्षसुखं लभते ।।

" दिव्यदृष्टिधारी जिनदेव, करता तास इन्द्रादिक सेव " येन रागः द्वेषः मोहः इत्यादयो दोषा परित्यक्ताः, पुनः परमा शान्ता स्थितिः (दशा) अनुभूता, येन परमा दिव्या दृष्टिः प्राप्ता, अतएव इन्द्रादयो देवाः यस्य सेवां कर्तुं तत्पराः सन्ति तादृग् अर्हन् तीर्थङ्करः भगवान् एव सत्यः देवः अस्ति, स एव देवाधिदेवः अस्ति इति निश्चीयते, इति स्वस्य मत्या तत्त्वं सुनिश्चित्य कल्याणार्थिनः जनाः उक्तं जिनेश्वरं भगवन्तं साक्षात्कर्तुं निश्चयेन सेवेरन् । येन संपूर्णं स्वरूपं साक्षात्कृतं वर्तते तादृशं जिनेश्वरं भगवन्तं अनन्यभावेन भजन् अपि आत्मसाक्षात्कारं अनुभवति इत्यत्र न किमपि विस्मयास्पदम् ।।

" ब्राह्मण ते जे ब्रह्म पिछाणे " ब्रह्म जानाति असौ ब्राह्मणः, वा ब्रह्मणि–ज्ञाने स्नानं करोति–निमज्जति असौ ब्राह्मणः, अज्ञानं न सेवते स ब्राह्मणः, अथवा ब्रह्म ब्रह्मचर्यं शीलं संतोषं वा अन्यं सद्गुणं सेवते सदा सः ब्राह्मणः । उपर्युक्तेन सिद्धान्तेन सिद्ध्यति ज्ञानाचारयोः द्वयोः सेवया ब्राह्मणः कथ्यते । यस्मिन् ज्ञानं नास्ति, आचारोऽपि नास्ति सः न ब्राह्मणः । अतः उत्तमेनाशयेन उक्तं च अन्यत्र ' सर्वासु

जातिषु ब्राह्मणाः अपि सन्ति तथा सर्वासु जातिषु चाण्डालाः अपि सन्ति । ' इति महत् वचनं प्रमाणम् । ब्राह्मणेषु चाण्डालाः अपि सन्ति चाण्डालेषु ब्राह्मणाः अपि सन्ति । निर्मलेन कर्तव्येन ज्ञानेन विशुद्धाचरणेन ब्राह्मणः उच्यते । ब्राह्मणलक्षणमधस्तनम्—

यो वदेदिह सत्यानि, हिंसितं च न हिंसति । गुरुं सन्तोषयेन्नित्यं, तं देवाः ब्राह्मणं विदुः ॥

" क्षत्री कर्म–रिपु वश आणे " रागं द्वेषं मोहं च इत्यादिकान् कर्मशत्रुन् जित्वा स्वायत्तान् कुर्यात् स एव सत्यः क्षत्रियः । राजन्यकुले जन्मनैव क्षत्रियत्वं नास्ति, सत्यं क्षत्रियत्वं कर्मशत्रुणां विजये एव इति उपरितनेन वचसा सिद्ध्यति किन्तु यः क्षत्रियस्य नाम अर्थात् क्षत्रिय-पदं धारयन् रागद्वेषमोहादिकान् तु न जयति किन्तु ते दोषा एव तं जयन्ति तेन कारणेन सः निरपराधिनः पक्षिणः स्वानन्दाय वा रसनायाः लोलुपतया मृगयायां हन्ति वा अन्यस्माद् वधं कारयति स केवलं क्षत्रियस्य नाम कलंकितं करोति । सत्ये क्षत्रिये क्षमा मृदुता सरलता सत्यम् सन्तोषः संयमः इत्यादयः महान्तः सद् गुणाः भवन्ति । विशुद्धं शीलं धृत्वा परदाराः मातृवत् भगिनीवत् मत्वा अनीतिमार्गं परित्यज्य विवेकरत्नं स्वीकृत्य मांसं मदिरां इत्यादीनि दुष्टानि व्यसनानि उन्मूलयितुं सद् गुणाः अवश्यं आदरणीयाः । ये ये जनाः यासु यासु जातिषु वर्तमानाः । उक्तान् सद् गुणान् सेवन्ते ते ते सज्जनाः जातौ दृष्टान्तभूताः भवन्ति एवमनेकान् अशरणान् जनान् जीवान् उद्धर्तुं समर्थाः तथा च सद्यः स्वदेशं समुद्धर्तुम् अतीव सहायका भवन्ति ।

प्रजानां रक्षणं दानमिज्याध्ययनमेव च विषयेष्वप्रसक्तिश्च, क्षत्रियस्य च लक्षणम् ॥

" वैश्य हाणि वृद्धि जे लखे " यः लाभं हानिं ज्ञात्वा यत्र बहुलाभः अस्ति तत् कार्यं कुरुते यत्र बहुः हानिः तत् सुतरां परित्यजति स एव वैश्य नाम अलंकरोति यैः कैश्चित् कारणैः ब्राह्मणानां क्षत्रियाणां स्थितिविपर्ययः दृश्यते अर्थात् तेषां यादृश्या परमार्थिन्या स्थित्या भवि-

तव्यम् अर्थात् यादृशी स्थितिः अपेक्ष्यते ततो विरुद्धा दृश्यते, एवमेव वैश्येषु अवलोक्यते। प्राचीनाः कुतर्काः, अयोग्याः आचाराः, अस्थाने धनव्ययाः, मिथ्याभूतमन्यदाचरणम् वार्ताचरणम्, इत्यादिषु स्वकीयं कुलीनत्वम् आमनन्ति उत देशस्य दुर्दशां कुर्वाणाः महदनिष्टं कुर्वाणाः असूयाद्वेषमत्सरादयः दुर्गुणाः परिपुष्टाः, स्वस्य परस्य च अहितं कुर्वन्ति तादृशः जीवघ्नः दोषान् उन्मूलयितुं प्रतीक्षा असह्या, अथ कुम्भकर्णनिद्रा त्याज्या अन्यथा दुःखदा परिस्थितिः प्रतिदिनं विवर्द्धते। उक्तञ्च—

**अलसस्य कुतो विद्या, जपतो नास्ति पातकम्। मौनिनः कलहो नास्ति, जागृतस्य भयं कुतः ॥**

इति महद् वाक्यं वैश्यैः प्रतिक्षणं चिन्तनीयम्; 'गतं न शोचनीयम्' यतः—गतं शोचन् जनः मूर्खोऽभिधीयते। तदुक्तम् भोजप्रबन्धे—

**खादन्न गच्छामि हसन्नजल्पे, गतन्न शोचामि कृतं न मन्ये। द्वाभ्यां तृतीयो न भवामि राजन्!, किं कारणं भोज! भवामि मूर्खः॥**

भावि वस्तु विचारणीयम् तत्र यावती उपेक्षा तावती एव महती हानिर्भवति इति ज्ञानिनो जानन्ति! अलं बहुना! विस्तरेण किम्?।

"शूद्र भक्षअभक्ष जे भखे" येषां भक्ष्याभक्ष्यो नियमः नास्ति ये परेषां अमोघान् प्राणान् हत्वा राक्षसवत् मांसं अदन्ति, सुरापानं कुर्वन्ति, मृगयायां कोटिशः जीवान् संहरन्ते अन्यस्मात् संहारं कारयन्ति, तेषु अनर्थकारिषु कार्येषु क्षणिकसुखस्वार्थाय असंख्यां जीवहिंसां ये नैव गणयन्ति एतादृशान् नीचान् जनान् ज्ञानिनः पुरुषाः शूद्रकोटौ गणयन्ति; उत्तमाः पुरुषास्तु स्वप्नेऽपि परजीवान् दुःखयितुं नैव वाञ्छन्ति उत्तमाः पुरुषाः तु सर्वानेव प्राणिनः स्वप्राणसदृशान् ज्ञात्वा स्वस्मादप्यधिकं यथास्यात्तथा परजीवान् अधिरक्षन्ति अतः ते मिथ्याभूतानां वस्तूनां भोगेषु अनासक्ताः स्वस्य परस्य च श्रेयोऽधिकं स्यात् तथा प्रतिक्षणम् अहर्निशं प्रयतन्ते सत्पुरुषाः नीतिमार्गं प्रमाणभूतं परित्यज्य अप्रमाणिकम् अनीतिमार्गम् न स्वीकुर्वन्ति, तत्रैव तेषां साधुत्वं तदा क्षुद्राः जन्तवः परप्राणान् हन्तुं निर्भीताः भवन्ति तादृशमनार्यम् आचारं कुर्वन्तः

क्षुद्राः जन्तवः इदं जन्म परजन्म निरर्थकं कुर्वन्ति तथा जगति शापरूपाः भवन्ति अनेकान् अज्ञानिनो जनान् विपथे नियोजयन्ति तान् दुःखिनः कुर्वन्ति ॥

" अथिररूप जाणो संसार " संसारः, संसारिणां माया, संसारस्य क्षणिकं सुखमित्यादिकम् अशाश्वतम्, जीवः प्रतिक्षणं कर्मणा अन्यत्रान्यत्र परिभ्रमति, नासिकाविद्धस्य महोक्षस्येव कर्म जीवं यत्र आकर्षति तत्र आकर्षयति एव, तत् दुरीकर्तुं जीवः सर्वथा असमर्थः, यतः कर्मणा जीवस्य संसारे वासः अनियतः, यस्य यादृशी मतिः भवति तस्य तादृशी गतिरिति शास्त्रवचनेन; शुभं कर्म कुर्वतः शुभा गतिः देवमनुष्यादिरूपा जायते, अशुभं कर्म कुर्वतः अशुभा गतिः नरकादिरूपा यावत्कालं तन्मूलानि रागद्वेषमोहादीनि न उन्मूलितानि तावत्कालं संसारे परिभ्रमत्येव, अर्थात् तावत्कालं विषयेषु आसक्ताः संसारस्य मायायां मुह्यन्ति आयतौ दुःखप्रदेषु क्षणिकेषु कल्पितेषु सुखेषु सुखबुद्ध्या मधुबिन्दुदृष्टान्तवत् मुह्यत्येव मोहेन विरलीभूताः जीवाः विषयवासनायाः बलेन एकस्माद् भवाद् अन्यस्मिन् भवे, द्वितीयस्मात् च भवे तृतीयस्मिन् भवे इति भवान्तरं कृत्वा स्वस्य गंभीरया च्युत्या भवाटव्यां परिभ्रमति एव ।

" थीर एक जिनधर्म हितकार " अस्मिन् चले संसारे यत् किमपि अचलं सारभूतं हितकरं वस्तु प्राप्यं स्यात् तर्हि भगवता जिनेश्वरेण उपदिष्टं धर्मस्वरूपम् एवास्ति । अर्थात् आत्मद्रव्ये उत्तमरत्नवत् प्रकाशी व्याप्तः विशुद्धः ज्ञानाचारादिः धर्मसारभूतो हितकरोऽस्ति, तथोक्तमात्मधर्मं प्रकाशयितुं सर्वज्ञेन परमात्मना निर्मितानि साधनानि प्रवाहरूपेण विद्यन्ते, निर्मलः स्फटिकः यथा तथा आत्मनः स्वभावः क्रोधादिकषायरहितोऽस्ति यथा रक्तोपाधिवशात् रक्तः प्रतिभाति स्फटिकः तथा आत्मापि पुण्यपापयोगेन रागद्वेषादीन् प्राप्नोति अतः कषायवान् दृश्यते। रक्तपुष्पेण उपाधिना रहितः स्फटिकः पूर्ववत्प्रकाशमानः प्रतिभाति तथा पुण्यपापाभ्यां जायमानैः रागद्वेषादिभिः रहितः आत्मापि निर्मलः

निरावृतः निर्विकल्पकदशासम्पन्नो भवति; तदा अचले वीचिरहिते रत्नाकरे रत्नराशिरिव आत्मनः सम्पूर्णे प्रदेशे ज्ञानम् दर्शनम् आचारादिः इत्यादीनां सद् गुणानां राशिरभिव्यक्तो भवति; आत्मप्रदेशे स्थितं सद् गुणराशिम् ये रागद्वेषादयः प्रकटितुं न ददति तान् समुन्मूलयितुं सावधानतया तत्साधनानि सेवितुं सर्वदा आत्मार्थिभिः समुद्यतैः भवितव्यम् इति कर्तव्यं च श्रीजिनेश्वरेण भगवता उपदिष्टम् इयं प्रणाली प्राचीना अस्ति ॥

" इन्द्रिय सुख छिल्लर जल जाणो " यथा एकः महान् सागरः वा अगाधं सरः गाम्भीर्येण पल्वलम् तिरस्करोति तथा आत्मनः अतीन्द्रियं स्वाभाविकं सुखं सागरः पल्वलमिव इन्द्रियजन्यं विषयसुखं सुतरां तिरस्करोति इति ज्ञेयम् आत्मनः सुखम् स्वभावतः निरूपाधिकम् इन्द्रियजन्यम् विषयसुखं स्वभावतः सोपाधिकम् आत्मनः सुखं स्वभावतो निर्विकल्पकम् इन्द्रियजन्यं सुखं स्वभावतः एव सविकल्पकम् आत्मनः सुखमविनाशि, इन्द्रियजन्यम् विषयसुखं क्षणिकम्, आत्मनः सुखं सम्पूर्णम्, इन्द्रियजन्यं विषयसुखमसम्पूर्णम् आत्मनः सुखम् अकल्पितम्, इन्द्रियजन्यं सुखं कल्पितम्, आत्मनः सुखम् एकरूपम्, इन्द्रियजन्यं विषयसुखमनेकरूपम्, आत्मसुखं शाश्वतम्, देहसुखमशाश्वतम् इति सुखयोः मिथः भेदं सम्यक् विचार्य आत्मनः स्वाभाविकं पवित्रम् अखण्डम् अविनाशि निर्विकल्पकम् निरुपाधिकम् अकृत्रिमम् अजरामरम् शाश्वतम् सुखं प्राप्तुं प्रतिक्षणं प्रयतितव्यम् । इन्द्रियजन्यसुखस्य मोहम् परित्यज्य मनः स्थिरं कृते सति सः सुलभ इति विज्ञेयः ।

**आपदां कथितः पन्थाः इन्द्रियाणामसंयमः तज्जयः । संपदां मार्गो येनेष्टं तेन गम्यताम् ॥**

" श्रमण अतिन्द्रि अगाध वखाणो " श्रमणपदेन मुनिराजः तपस्वी अभिधीयते । यदनुभूयमानमतीन्द्रियमात्मसुखं निःसीमं परिपूर्ण-मस्ति । इन्द्रियजन्यसुखमनुभवतामभिलषतां जनानां क्षणिकं कल्पितं सुखं पल्वलवत् अपूर्णमिति मिथः द्वयोः मिलितयोः तयोः यत् हितकरं स्यात् तदर्थं प्रयतितव्यम् ।

" इच्छारोधन तप मनोहार " विविधेषु विषयेषु धावमानानि मनःप्रभृतीनि इन्द्रियाणि स्वाधीनानि कृत्वा विविधविषयजन्यान् राग-द्वेषादीन् निवारयितुम् आत्मनिग्रहः शोभनं मनोहरं तपः अस्ति, उक्तानिष्टान् विकारान् शमयितुमेव समर्थैः ज्ञानिभिः आभ्यन्तरं बाह्यञ्च तप उपदिष्टमस्ति । इति उभयविधस्य तपसः स्वरूपमन्यत्र बहुधा निर्दिष्टमस्ति । तत्त्वतः ततो ज्ञात्वा यथाशक्ति तस्य आदरः विशेषतः कर्तव्यः । तपसा विकाराः दग्धाः भवन्ति, विविधाः सिद्धयः प्राप्नुवन्ति । तथा च परिपूर्णम् कर्ममूलस्य क्षयो भवति । आत्मा निर्मलो भूत्वा शाश्वताक्षय-मोक्षसुखस्य भोक्ता भवतीति । अतस्तत्रैव पूर्णतया प्रयतितव्यम् ।

" जप उत्तम जगमें नवकार " येनोच्चकक्षीयस्य आत्मनः स्मरणं भवेत् सः जपः उच्यते । तादृक् नवकारमहामन्त्रेण तुल्यः अन्यः कश्चन जपो नास्ति । यतः नवकारमंत्रे अर्हन्नित्यादयः पञ्च परमेष्ठिनः समाविष्टाः सन्ति । तत्रारिहन्ता=अर्हन् सिद्धश्च भगवन्तौ इमौ गुणा-करौ स्तः । तथा आचार्यः भगवान् निर्मलैः षट्त्रिंशतसंख्याकैः गुणैः, उपाध्यायः भगवान् उत्तमेन विनयेन सतां शास्त्राणामध्ययनाध्यापनादिका-नाम् गुणानां पञ्चविंशत्या च, मनुष्यलोकमध्यवर्तिनां मुनीनां समुदायः सप्तविंशतिः अहिंसादिकैः गुणैरिति, एते भगवन्तः त्रीणि जगन्ति पालयन्ति, तथा चानंतेन ज्ञानेन दर्शनेन चरित्रादिकेन अरिहन्त्यादिकेन च अलंकृतोऽस्ति । तादृक् विशुद्ध आत्मधर्मः अपि नवकारमहामन्त्रे समाविष्टः भवति । आत्मानं साक्षात्कर्तुमिच्छुभिः भव्यजनैः उक्तम् महत् मन्त्रं पुनः पुनः जपनीयमस्ति तेन सुतरामात्मनः शीघ्रातिशीघ्रेण समुन्नतिः भवति ।

" संयम आतम थिरता भाव, भवसायर तरवा को नाव " आत्मप्रदेशे रत्नज्योतिः इव ज्ञानादीनां सद्गुणानां समुदायः तथा च स्वाभाविकेन प्रेम्णा रतिः संयमः कथ्यते । यथा महत्या नौकया भवसागरः सुखेन उत्तर्तुं शक्यः तथा उक्तस्य संयमस्य सेवया आत्मा सुखेन

जन्मजरामरणादीनि अनंतानि दुःखानि सन्ति तत्स्वरूपजलेन परिपूर्णस्य संसारसमुद्रस्य पारम् अधिगच्छति। हिंसा, असत्यम्, अदत्तम्, अब्रह्म, परिग्रहः च इत्यादिभ्यः निवृत्तो भूत्वा इन्द्रियाणि स्वाधीनानि कृत्वा मनोवाक्कायानां कुत्सितान् व्यापारान् त्यक्त्वा अहिंसादयः उत्तमा साधनसंततयः सेव्येति आत्मस्थिरतारूपस्य संयमगुणस्य आराधनायैव, तेनैव भवसागरं तीर्त्वा मोक्षपुर्यां गमनं सुलभं भवति, तद्विरोधेन हिंसासत्यास्तेयमसंयमादिकानाम् अनन्यभावेन सेवया आत्मभावः अतीव अस्थिरः भूत्वा मालिन्यम् अधिगच्छति। तस्मात् सः अरहटघटिका-न्यायेन भवचक्रे अटति एव। एतादृशी एव संसारस्थितिरिति।

" छति शक्ति गोपवे ते चोर " उक्तं संयमगुणं प्राप्तुम् असंयमं दूरीकर्तुम् यः वर्तमानाम् स्वीयां शक्तिं न दर्शयति किन्तु तस्याः दुरुपयोगं कुर्याच्चेत् तदा स खलु चोरः। लोके प्रसिद्धः चौरः तमसि परद्रव्यं हरति तत् रहसि यथा स्यात् तथा गोपयति। परन्तु अयम् आत्मचौरः तु स्वकीयाभ्यन्तरमाधायात्मसाधनस्य अमूल्यावकाशात् स्वमेव स्वस्माद् वञ्चितं कृत्वाऽजानता आत्मानं सर्वस्वं च नाशयति। एवम् हस्तात् तादृशामूल्यावसरनिर्गमने सति महापरिश्रमेणापि स्वकीयावसाधनतां न सोधयितुं शक्नुयात्। इत्येवात्मवञ्चकता पदेन अभिधीयते।

" शिवसाधक ते साध किशोर " प्रमादं परित्यज्य अप्रमत्तरूपेण सिंह इव शूरो भूत्वा संयमेन मोक्षमार्गं साधयति स एव सत्यसाधुः भण्यते किन्तु साधुवेषं धृत्वा पवित्रं संयमं तु न सेवते तद् विरोधेन अर्थात् असंयमाचरणेन वेषविडम्बनं कृत्वा साधुनाम कलंकितं करोति। उत्तमाः पुरुषा यां यां प्रतिज्ञां कुर्वन्ति तां ताम् आदावेव सम्यग् विचार्य सुखेन निर्वाह्यां प्रतिज्ञामङ्गीकुर्वन्ति, ताम् च मरणकालपर्यन्तं परिपा-लयन्ति। तत्र कदापि अवनतिं नेच्छन्ति तथा सर्वैः मुमुक्षुभिः संयमपालनरूपा प्रतिज्ञा संघसमक्षे अङ्गीकृता तस्याः आजीवनं विवेकेन निर्वाहः

स्यात् कश्चनापि प्रमादः न स्यादिति महाशयानां मुख्यं कर्तव्यम्, तत्रैव स्वपरयोः हितस्य समावेशः भवतीति हृदयम् ।

"अति दुर्जय मनकी गति जोय" सर्वेन्द्रियेषु रसनेन्द्रियस्य वशीकरणं दुष्करं, यथा सर्वव्रतेषु ब्रह्मचर्यव्रतपालनं दुष्करं, तथैव योगेषु मनोयोगजयः अतीव दुष्कर' विद्यते। तस्य जयाय शास्त्रेषु उपायाः निर्दिष्टाः। तस्य गुरुगम्यं बोधं लब्ध्वा मनः यथा स्थिरं स्यात् तथा प्रयतितव्यम्। पारदवत् चञ्चलं मनः वशीकर्तुं बहुपुरुषार्थस्य अपेक्षा वर्तते । तत्फलमपि महदुक्तं अस्ति ।

**" मान पारद मूर्च्छित भये, अंतरंग गुणवृन्दः जागे भाव निरागता, लगत अमृतके बिन्द ॥ "**

मनः पारदः नीरागता रूपस्यामृतस्य स्पर्शेन मूर्च्छितो भवति तदा आत्मनः आभ्यन्तरः गुणसमुदायः जागृतो भवति। तच्च मनसः जयेनैव सकलान् सद्‌गुणान् प्राप्नुवन्ति । तेनैव चपलं स्वाधीनं भवति उक्तं च–'मनसि वशीकृते सर्वाणि इन्द्रियाणि जितान्येव' इति कृते कर्मशत्रवः पराजिताः भवन्ति। अन्ते मन एव जेयम् । यस्य जयेन सर्वं जितं भवति। श्रीमानानन्दघनः वदति इतोऽधिकं किं प्रमाणमपेक्षते ।

**मन एव मनुष्याणां, कारणं बन्धमोक्षयोः । तस्माज्जेयं मनः पूर्वं संसारोद्धारमिच्छुना ॥**

" अधिक कपट नारीमें होय " नरनारीषु मध्ये स्वभावतः नारीषु अधिकं कपटं भवति इति सामान्यतो नियमः। अपवादतस्तु स्त्रियोऽपि पुरुषापेक्षया निश्छलाः भवन्ति। अयं संभवोऽप्यस्ति स्त्रीणां चरितानि लेख्यानि न सन्ति। बहुलछलाः स्त्रियः सर्वत्र दृश्यन्ते, तथा चात्र शास्त्रमपि प्रमाणम् अस्ति । अपवादेऽपि शास्त्रमेव प्रमाणम्, दृश्यन्तेऽपि निश्छलाः स्त्रियः भाग्येन दृश्यन्ते। तत्र प्रायः तादृक् दृष्टान्तम् न प्राप्नोति, इति तु स्त्रीणां जगति स्वभावः एव उक्तं च–' असत्यं साहसं माया साहसम् छलम् अज्ञानम् लोभः

विषयभोगाय निर्दयता अपवित्रता' इति स्त्रीषु स्वाभाविकाः अवगुणाः । अत्रापवादरूपेण ईदृश्यः सन्त्यः महत्यः शीलसम्पन्नाः भवन्ति । तथा ताः स्वपतिमेव स्वगुरुम् मत्वा सेवन्ते ॥

स्मृता भवति तापाय, दृष्टा तून्मादकारिणी; स्पृष्टा भवति मोहाय, सा नाम दयिता कथम् ? ॥

मू०—नीच सोई पर द्रोह विचारे, ऊंच पुरुष पर विकथा निवारे। उत्तम कनक कीच सम जाणे, हरख शोक हृदये नवि आणे॥१७॥

नीचः परं विघटितुं भृशमुद्यतो हि, उच्चः कलंकरहितं कुरुते सदैव ।
पंकं सुवर्णमुभयं सममेव वेत्ति, निश्शोकमोदधनवान् खलु चोत्तमः सः ॥१७॥

मू०—अति प्रचंड अग्नि है क्रोध, दुर्दम मान मतंगज जोध; विषवल्ली माया जगमांही, लोभसमो सायर कोइ नांही ॥१८॥

मू०—नीच संगथी डरिये भाई, मलिये सदा संतकुं जाई, साधु संग गुण वृद्धि थाय, नारी की संगते पत जाय ॥१९॥

क्रोधः प्रचण्डदहनो ननु हृद्गतोऽस्ति, मानं सुदुर्दमकरी परलोकनाशी;
मायैव सा विषलता भवमोहकर्त्री, सिन्धुर्न लोभसदृशः कथितः कुतोऽपि ॥ १८ ॥

नित्यं हि नीचजनसगमतो विभेतु, संगं कुरुष्व मिलनं मुनिना हितेन;
वृद्धिर्गुणस्य खलु साधुसमागमेन, नार्येकसंगतिपरस्य जनस्य पातः ॥१९॥

मू०—चपला जेम चंचल नर आय, खिरत पान जब लागे वाय; छिल्लर अंजलि जल जेम छीजे, इण विध जाणी ममत कहा कीजे ॥२०॥

मू०—चपला तिम चंचल धन धाम, अचल एक जगमें प्रभु नाम; धर्म एक त्रिभुवनमें सार, तन धन योवन सकल असार ॥२१॥

विद्युल्लतेव नरजीवनमस्ति किञ्चित्, कालं सुपक्वदलमञ्जलितोयतुल्यम् ,
लक्ष्मीरपीह चपलेव चला तथैव, ज्ञात्वा सखे ! जगति मुह्यसि तन्मुधैव ॥२०॥
धान्यं धनञ्च चपलं चपलेव किन्तु, नामाचलं प्रभुजिनस्य सदैव सत्यम् ;
सारो हि सर्वभुवने ननु धर्म एकः, देहो धनं क्षणिकयौवनमस्त्यसारः ॥२१॥

मू०—नरक द्वार नारी नित जाणो, तेथी राग हिये नवि आणो; अन्तर लक्ष रहित ते अन्ध, जानत नहि मोक्ष अरु वन्ध ॥२२॥
मू०—जे नवि सुनत सिद्धान्त वखान, वधिर पुरुष जगमें ते जाण; अवसर उचित वोली नवि जाणे, ताकूं ज्ञानी मूक वखाणे॥२३॥

स्त्रीद्वारमस्ति नरकस्य सुनिश्चितं हि, रज्यस्व तेन नहि जीव ! भयेन तत्र,
हृद्यस्ति यस्य नहि लक्ष्यमिहान्धकः सः, जानाति नो निजविमोक्षमथ स्वबन्धम् ॥२२॥
सिद्धान्तशास्त्रपठने श्रवणे न शक्तः, जानीहि तं वधिरमेव न संशयोऽत्र,
वक्तुं न वेत्त्यवसरोचितवाक्यजातं, मूकः स एव कथितो विदुषां वरेण ॥२३॥

मू०—सकल जगत जननी हे दया, करत सहु प्राणी की मया, पालन करत पिता ते कहिये, तेनो धर्म चित्त सद्दहिये ॥२४॥

संसारजीवजननी प्रथिता दयैव, या सर्वप्राणिपरिपालनबुद्धिमन्त्री;
यः पालयन् प्रभवतीह पिता स एव, धर्मं वृणीष्व पितरं ननु तेन मित्र ! ॥२४॥

"नीच सोई पर द्रोह विचारे" परस्यानिष्टं परस्य दुर्दशाम् परस्य दुःखं परस्य उपाधिम् इत्यादि चिन्तयन् व्यर्थमेव स्वीयं कालं यापयति । ॥१९॥

शयनोत्थानादिषु क्रियासु तदेव चिन्तयन् परस्य अनिष्टकालं मृगयन् सति समये तथा करोति एवं तादृशि कार्ये परमुत्तेजयति स्वस्य कल्पितं स्वार्थम् साधयति क्षणमपि शुभं विचारं न करोति सः खलु पापी ज्ञेयः। यदि च परस्य प्रबलेन योगेन तस्यानिष्टं न भवति तस्य किञ्चिदप्यन्यथाकर्तुमपि असमर्थः, तथापि दुष्टः जनः स्वीयया निकृष्टया वृत्या दुष्टं कार्यं करोति एव। परद्रोहकारी प्रतिक्षणं दुःखी भवति, तथा सर्वेषां भद्रम् इच्छन्तः जनाः सदा सुखिनः सन्ति। शाश्वतं सुखमिच्छुभिः जनैः परद्रोहः क्षणमपि न चिन्त्यः।

"ऊंच पुरुष पर विकथा निवारे" यत्र वचने स्वस्य परस्य च हितं नास्ति तादृक् निरर्थकं विवेचनम् उत्तमाः पुरुषाः न कुर्वन्ति। कुत्सितं कार्यं कुर्वन् जनः स्वहितात् पतितः भवति, तथा प्राप्तसामग्र्याः स्वयमपि लाभं न गृह्णाति, न चान्यं ग्राहयति। विकथाकारो जनः परनिन्दां कुर्वन् स्वस्य परस्य च महतीं दुर्दशां करोति, तस्मात् यत्र किमपि तत्त्वं न भवेत् लाभः अपि न स्यात् तदपेक्षया सदुद्यमेन स्वस्य परस्य च हितं कार्यं तदेव श्रेयः अस्ति।

"उत्तम कनक कीच सम जाणे, हरष(ख) शोक हृदये नवि आणे" उदारचित्ताः निःस्पृहाः जनाः विश्वस्य दृश्येषु पदार्थेषु न मुह्यन्ति, सम्यग्ज्ञानदृष्ट्या जडस्य चेतनस्य च स्वरूपं ज्ञात्वा यथाशक्ति जडं परित्यजन्ति, तान् सुवर्णराशिरपि न मोहयति। ते निःस्पृहतया सुवर्णं पंकवत् तिरस्कुर्वन्ति। अत एव सुवर्णसदृक्षैः परवस्तुभिः सह सम्बन्धेऽपि हर्षोद्रेकः न भवति, तद्वियोगे दुःखमपि न भवति। तत्त्वदृष्टयः इष्टानिष्टे संयोगवियोगौ इत्यादि सर्वत्र समतां धारयन्ति। अतस्ते सर्वदा प्रसन्नचित्तेन सन्तोषसुखाब्धौ निमग्नतां यान्ति। एतादृशान् तत्त्वज्ञानिनः स्वप्नेऽपि क्लेशः न स्पृशति। ते स्वीये आत्मनि अकृत्रिमं परिपूर्णं सुखम् अनुभवन्ति। इदृशो चोत्तमा वृत्तिरात्मनि यस्य जागृता, तस्य भाग्योत्कृष्टता खलु। सः विमुक्तः भवति भवबन्धनादाशु एव।

"अति प्रचण्ड अग्नि है क्रोध" द्वेषः, ईर्ष्या, असूया, मत्सरः, परद्रोहः, वैरम्, हिंसा शापः च इति क्रोधस्य एवान्तरभेदाः सन्ति। क्रोधः महान् भयंकरः अग्निरिव भयंकरः अस्ति। यस्य मनसि जायते तमेव सन्तप्तं करोति। तस्य क्रोधाग्नेः बाष्पः निःसृतः यं प्रतिगच्छति तमपि उद्विग्नं करोति। अन्यः अग्निः जलसेकेन शाम्यति, क्रोधाग्निस्तु शमः प्रशमः उपशमः क्षमा शान्तिः प्रशान्तिः उपशान्तिः इत्यादिभिः उपचारैः शाम्यति, अग्निना दग्धायां भूमौ बीजानि कदाचिदुत्पद्यन्ते किन्तु क्रोधाग्निना दग्धायां हृदयभूमौ कदापि प्रेमांकुराः नोत्पद्यन्ते इति सर्वथा विचार्यमाणे क्रोधः अहितकर एव अतएव सः सुतरां त्याज्यः सुजनैरिति।

"दुर्दम मान मतंगज जोध" अत्र मानस्य मदोन्मत्तस्य हस्तिनश्च उपमानोपमेयभावः निर्दिष्टः अस्ति। तादृशात् हस्तिनः महता कष्टेन निगमनं कर्तुं शक्यते। युद्धे मदोन्मत्तः हस्ती अग्रे भवति—इति किंवदन्ती अपि श्रूयते। सः मदोन्मत्तः सन् नगरस्य सुदृढमपि द्वारं विशीर्णं करोति। ममताभावेन उन्मत्तः मोहमदिरया युक्तः अहंकारोऽपि तथा अस्ति। तस्यापि क्रोधवत् जडता मदः अभिमानः इत्यादयः अनेके अवान्तरभेदाः सन्ति। मदोन्मत्तः हस्तीव सोऽपि कष्टेन स्वाधीनः भवति। अतः मिथ्याभिमानेन जीवाः अकर्तव्येऽपि साहसं कुर्वन्ति तत्र ते क्वचिदेव स्वार्थं साधयन्ति अपि तु उन्मत्तभावेन कृतानां साहसानां फलम् आजीवनम् अनुभवन्ति। अत्रोदाहरणानि दुर्योधनादयः सन्त्येव। तथा सदैव ये निरभिमानिनः ते धन्याः अभिमानेन विनयः लुप्तः भवति। अतः अभिमानः त्याज्यः। विनयगुणस्तु उपादेयः। विनयेन वैरी अपि वशं याति॥

तावदाश्रीयते लक्ष्म्या, तावदस्यास्थिरं यशः। पुरुषस्तावदेवासौ, यावन्मानान्न हीयते॥

"विषवल्ली माया जगमांही" सम्पूर्णे हि संसारे विस्तृता कानन विषस्य वल्ली अस्ति तर्हि सा माया एव, यथा विषवल्ल्याः पत्रेषु पुष्पेषु

स्वरूपस्य हिताहितयोः गुणदोषयोः यथार्थं ज्ञानं श्रद्धा च जागर्ति । निर्मलेन च ज्ञानेन श्रद्धया च स्वचरितं शुद्ध्यति । एवं रत्नत्रय्याः सहायेन आत्मा अविनाशि सुखं प्राप्नोति । अत्र साधुसंगतिः आलम्बनम् । अतः सैव उपादेया । अत्रेदं सूक्तमपि स्मर्यते ॥

चन्दनं शीतलं लोके, चन्दनादपि चन्द्रमाः । चन्द्रचन्दनयोर्मध्ये, शीतलः साधुसंगमः ॥

"नारी की संगत पत जाय" जोपासंगात्पदभ्रष्टः । परनार्याः परिचयेन स्वस्या यशः भवति यस्य स्वकीया स्त्री न सन्तोषदा वा यस्याः स्वपतिर्न संतोषप्रदः तयोरेव पापाचारकरणस्य इच्छा जायते । तत्र अपि न सन्तोषः तदा परिचयान्तरं कुरुतः तौ, इति अस्वामिकः पशुः इव लज्जां विवेकं परित्यज्य इतः ततः भ्रमन्तौ स्त्रीपुरुषौ स्वीयां मर्यादाम् उल्लंघयन्तौ कामान्धभावेन कुलहा कुलांगारकादिकं नामधेयं लभेते । प्रमेहादिभिः विविधैः रुग्रोगैः पीडितौ भवतः । अन्ते नरकादिकां दुर्गतिं गच्छतः । अतः इदमेव योग्यं विषयलालसा परित्यज्य स्वपतौ स्वस्त्रियामेव रागः सन्तोषः च धर्तव्यौ । इति गृहस्थानां नियमः । साधूनां स्त्रियाः सम्बन्धः सर्वथा त्याज्यः, स्त्रियाः च परिचयेन विषयवासना जागृता भवति । अन्ते व्रतभंगलोकापवाददुर्गतयः भवन्ति ।

मानो म्लायति पौरुषं विगलति क्लेशः समुन्मीलति, स्थैर्यं जीर्यति धैर्यमेति विपदं गम्भीरिमा भ्रंस्यति ।
बुद्धिर्भ्राम्यति न प्रशाम्यति रुजा चेतोऽधिकं ताम्यति, व्रीडा क्लाम्यति कामिनीमदिरया मत्तस्य पुंसो हहा ॥

"चपला जिम चञ्चल नर आय, खिरत पान जब लागे वाय, छिल्लर अञ्जलि जल जिम छीजे, इणविध जाणी ममता कहा कीजे ॥ चपला तिम चंचल धन धाम ॥" चपला नाम विद्युत्, सा स्वभावतः एव चंचला, एकस्मिन् क्षणे एव अदृश्या भवति । तथा मनुष्याणाम् आयुः अतीव चपलम् । विद्युदपि यथा चपला तथा लक्ष्मीरपि । आयुः लक्ष्मीः च नाशाय न कालं प्रतीक्षेते । एकस्मिन् एव क्षणे विनश्यतः । यथा

वातेन पर्णानि अध· पतन्ति, अञ्जलितः स्वल्प जलं सद्यः एव स्यन्दते, तथा आयुः सद्य· विनाशि । लक्ष्मीः अपि सद्यः विनाशिनी एव । आयुः लक्ष्मी· च कदा विनश्यत इति ज्ञातुमपि न शक्यते । इति स्वमत्या असारस्य संसारस्य मायायां कथमासक्तिः² परवस्तुनि आसक्त्या एव दुःखं भवति च । स्वकीयसत्यं स्वरूपं स्वकर्तव्यमपि विस्मृत्य सत्यसुखेन वञ्चित. भवति, इयती माया ममता स्वीयेपु ज्ञानचरितादिपु यदि स्यात् च, निर्मलस्फटिकवत् प्रकाशमाने आत्मस्वरूपे अहंता स्यात् तदा स्वल्पे समये समग्रं दुःख विनश्येत् । अज्ञानिनः जीवाः परवस्तुपु कलत्रदेह-धनादिषु अहंतां ममतां च धारयन्ति । शुद्धम् आत्मद्रव्यं शुद्धज्ञानगुणं च मामकीनम् अस्ति इति अवगच्छन्तः विवेकिनः मानवाः एव सत्यरूपेण अहंत्वममत्वे रक्षयन्ति, अतः हसः क्षीरम् इव अम्बुमध्यात् दु.खं परित्यज्य सुखम् अनुभवन्ति । तदेव परमं कर्तव्यम् अस्ति ॥

"अचल एक जगमें प्रभु नाम"—प्रवाहरूपेण आदिसंसारे भगवतः ऋषभादिकस्य नाम अचलम् अस्ति । ते तु पूर्णतमाः परमात्मानः, अपूर्णानां देवदानवमनुष्याणां नामानि चलानि एव । ते यत्र यत्र स्थले जायन्ते तत्र तेषां नामापि भिन्नम् आसीत् । तदपि कदापि सम्यक् कदापि न सम्यक्, स्वीयेन शुभेन कर्मणा अशुभेन कर्मणा वा, अत· तेषां नामानि अचलानि न सन्ति । यैः पूर्वस्मिन् तृतीये भवे निर्मलैः अध्यवसायैः तीर्थंकर-नाम निष्पादितम् अत· तेषाम् अस्मिन् लोके आर्यदेशे उत्तमे कुले प्रादुर्भावः भवति । तत्र तेषां गुणनिष्पन्न सार्थकं नाम भवति । तेषाम् मोक्षः तु निश्चयेन तस्मिन् एव भवे निर्मितः भवति । अत. पुनरुत्पत्तिः न भवति तेषाम् , इति कारणैः प्रभोः एव नाम अचलम् । अपि च प्रभोः निर्मलम् नाम श्रद्धया स्मरन् मन्त्ररूपम् नाम ध्यायन् कर्मणा अलिप्तः अपुनर्भवी च भवति । सिद्धः बुद्धः मुक्तः च भवति । अतः प्रभोः निर्मलम् नाम ध्यायताम् । नाम अपि तथा अचल भवति । तेषाम् पुनर्जन्म अपि न विद्यते ।

"धर्म एक त्रिभुवनमें सार" यैः सत्साधनैः आत्मा नित्यं सुखं प्राप्नुयात्—जन्म जराम् मरणम् आधिम् व्याधिम् उपाधिम् तीर्त्वा अनन्तं सुखं

फलेषु छायायां विषमस्ति । तदाश्रितेऽपि विषं व्यापृतं भवति तथैव मायाकार्यमित्येतावानेव, भेदः विषलतया द्रव्यप्राणः विनश्यति, मायया तु भावप्राणः विनश्यति । मायाविनां सर्वाः क्रियाः विषव्याप्त्या भवन्ति । तया क्रियया ज्ञानदर्शनचरित्रादिः अमूल्यो भावप्राणः विनश्यति । भावार्थस्तु मायाविनः धर्मक्रिया स्वस्य अन्यस्यापि वा न सुखदा किन्तु स्वस्य परस्य दुःखदा । अतः सा हेया । निष्पापवृत्तिः उपादेया । विशुद्ध-भावेन मनसा वचसा कायेन क्रियमाणा व्यवहारक्रिया धर्मक्रिया च जीवं दुर्गतितः समुद्धरन् सद्गतौ नियोजितां करोति ”

“लोभ समो सायर कोय नांही ” लोभस्य सागरस्य च उपमानोपमेयभावः वर्तते । सः यथा जीवः लोभप्राप्यं वस्तु यदा प्राप्नोति लोभः वर्धते सः अनुक्रमेण सागरवद् विशालः भवति, परन्तु ‘लोभमूलानि दुःखानि’ इति न्यायेन लोभे एव दुःखानि सन्ति । तानि लोभान्धः न पश्यति । तस्मात् तत्राकृष्टः भवति । उक्तञ्च—‘अपि स्वयम्भूरमणं प्राप्नुयात्कोऽपि मानवः । किन्तु लोभसमुद्रस्य पारं सोऽपि व्रजेन्नहि ॥’ अयं लोभः सर्वेषामेव दोषाणां मूलम् । अथ च व्यसनवल्लीनामंकुरः च वर्तते । इत्यादि लोभदोषं विचार्य सुखमिच्छन्तः जनाः सन्तोषवृत्तिमव-लम्ब्य लोभवृत्तिं त्यजेयुः॥

“नीच संगसे डरिये भाई” ज्ञानिभिः खलसंसर्गाद् भेतव्यम् । यतः नीचसंगतिरेव महादुःखमस्ति । नीचसंगत्या प्राणी नीचवृत्तिम् अनु-सरति=अर्थाद् आददाति । नीचसंसर्गेण एव नरकादिप्राप्तिर्भवति । खलसंगमेन समीचीनं फलं न समायाति । अत एव शास्त्रकारः खलसंगतेः त्यागाय सत्संगतेः स्वीकाराय च उपदिशति । उत्तमसंगमेन वयमपि उत्तमाः भवामः, यथा सुगन्धिनः पुष्पस्य संगेन तैलादिके सुगन्धिर्जायते, मलयाचलस्य सुगन्धिनः पवनस्य संगेन वृक्षः अपि चन्दनायते । मेरुपर्वतस्य शिखरे स्पृष्टमपि तृणं सुवर्णायते, तथा उत्तमेन संगेन आत्मा उत्तमः भवति । उत्तमान् गुणान् प्राप्नोति । खलसंगमेन प्राणी खलायते । यथा स्वातिनक्षत्रजलं सर्पमुखे गत्वा विषं भवति, तप्तलोहे पतित्वा

निनश्यति, तथा उत्तमः आत्मा खलसंगमेन खलतां प्राप्नोति, अतः खलसंगः त्याज्यः । सत्संगः कार्यः । अत्र पुरातनकथामाश्रित्य अयं श्लोकः संगच्छते— 'माताप्येका पिताप्येकः, मम तस्य च पक्षिणः । अहं मुनिभिरानीतः, स चानीता गवाशनात् ॥' 'गवाशनानां स शृणोति वाक्यम्, अहं मुनीनां च शृणोमि नित्यम् , न तस्य दोषो न च मे गुणो वा, संसर्गजाः दोषगुणाः भवन्ति ॥' गवाशनसंसर्गी शुकः गालीं वदन्नासीत् , मुनिसंसर्गी शुकः श्लोकादि पठन्नासीदिति' ॥

"मिळिये सदा सन्त कुं जाइ" जगतां व्यवहारे निःस्पृहाणां साधूनां सङ्गमेन आत्मनः पारमार्थिकः लाभः जायते, तेषाम् आभ्यन्तरी या वृत्तिः निर्मला भवति सा गुणानुरागिणी भवति । अतस्तेषां दर्शनं पापहरं भवति । तेषाम् सेवायाः मातादिकस्य च किं वक्तव्यं, सतां सेवया अनंत-जन्मनां पापानि विनश्यन्ति । अपूर्वः आत्मलाभः प्राप्तः भवति । जगति उत्तमं किमपि वस्तु नास्ति, यत् सतां सेवया न प्राप्नुयात् । ऐहिकं तु प्राप्नोति, मुक्तार्थिभिः सतां सेवा अवश्यं कार्या । अत्र एकं पद्यम् अत्यन्तं शोभते, पठ्यताम्—

गुणवज्जनसंसर्गात् , याति स्वल्पोऽपि गौरवम् ; पुष्पमालानुसंगेन, सूत्रं शिरसि धार्यते ॥
महिमानं महीयांसं, संगः सूते महात्मनाम् ; मन्दाकिनीमृदो वन्द्याः, त्रिवेदी—वेदिनामपि ॥

"साधुसंग गुणवृद्धि थाय " हिंसाम् असत्यम् अदत्तम् अब्रह्म परिग्रहम् त्यक्त्वा आप्तवचनेन अहिंसादीनि उत्तमानि व्रतानि सेवित्वा तानि यथाविधि निर्वाह्य आत्महितं साधयन्ति ते साधवः । तादृशां साधूनां परिचयेन गुणाः वर्धन्ते दुर्गुणाः विनश्यन्ति विनयनम्रतादिकं यत् यत् निखिलगुणानां वशीकरणम् अस्ति, तस्य सदुपयोगः साधुपरिचये अवश्यं कर्तव्यः । गोधूमस्य चूर्णम् अतीव पिष्टं सत् मधुरं भवति, तथा सताम् सन्निधौ बहुलेन विनयेन आत्मनः बहुः लाभः जायते । विनयेन विज्ञानं प्राप्नोति देहे च विवेकदीपः प्रकाशते । तेन आत्मनः वस्तु-

नित्यम् अबाधं पुनर्जन्मरहितम् अचलं मोक्षसुखं प्राप्नुयात्। तानि साधनानि दानं शीलं तपः भावना देशविरतिः सर्वविरतिः इति धर्मः एव। सः धर्मः त्रिषु जगत्सु सारः अस्ति। यदि जीवः जन्ममरणादिभिः दुःखैः त्रस्तः स्यात्, निरुपाधिकस्य सुखस्य यदि लालसा स्यात्, तदा विश्ववत्सलेन मुनीशेन जिनेश्वरेण भगवता भव्यजनानां हितार्थम् उपदिष्टस्य धर्मस्य गुरुगम्यं यथार्थं स्वरूपं सुनिश्चित्य ध्यात्वा च तं यथाशक्ति सेवितु प्रयतेत।

"तन धन योवन सकल असार" शरीरं धनं यौवनम् इति सर्वं क्षणिकं भयग्रस्तं च, असारः अस्ति। शरीरं सर्वथा अशुचि प्रतिक्षणं विनाशि रोगग्रस्तम् अस्ति। लक्ष्म्याः अपरं नाम चपला, तस्याः स्वभावः एव अतीव चपलः। अतः सा स्वार्थसमन्विता सा पतिव्रता इति कदापि न विश्वसनीयम्। तस्याः योगेन मोहोन्मादादयः संभवन्ति। चोरेभ्यः भयम् अपि सदा एव वर्तते। यौवनान्तरम् अवस्थाक्रमेण जरापि समायाति महता वेगेन, इति यौवने विषयलालसाः च विविधाः विकाराः जायन्ते, अतः तत्र वयसि विशेषतः स्वमर्यादापालनाय ज्ञानिनः उपदिशन्ति. यौवनं येन निष्फलं निःसारितं तस्य स्वपरहिताय उपयोगं यः कृतवान् सः महान् भाग्यवान् ज्ञेयः, तथैव.लक्ष्म्याः देहस्यापि ज्ञेयम्। यावत्कालं पूर्वकृतस्य पुण्यस्य प्रबलः समुदयः भवति तावत्कालं लक्ष्मीः स्थिरा भवति। तावदेव कालं तस्याः सदुपयोगः स्यात् तर्हि स्वस्य परस्य हितं भवति। यदि सदुपयोगः न जातः तदा तस्याः कदा कः उपयोगः भविष्यति इति वक्तुं न शक्यते, इति तु निश्चितमेव। कृपणस्य हितं किम् अपि न भवति किन्तु क्लेशः एव। सः दीनः तस्य रक्षायाम् एव चिन्तितः तथापि पूर्वपुण्यस्य लये जाते लक्ष्मीः तं परित्यजति, तदा सः शोकातुरः भवति। उक्तञ्च—"**कृपणेन समं दाता, न भूतो न भविष्यति। अस्पृशन्नेव वित्तानि, यः परेभ्यः प्रयच्छति॥** इयं दशा कृपणस्य भवति। देहः तु विनाशस्वभाववान्। तत्सदृशेषु वस्तुषु मुग्धः भूत्वा आत्मसाधनस्य उपस्थितम् अमूल्यं समयम् उपेक्ष्य अन्तकाले

तदर्थं प्रयत्नः सर्वथा उपहासास्पदं युक्तम् तु एतत् अस्ति। मृन्मयात् देहात् आत्मसाधनरूपं सुवर्णं मृग्यम् इयम् एव बुद्धिमत्ता। निष्कर्षः तु उक्तानां सर्वेषां वस्तूनाम् असारत्वं शास्त्रदृष्ट्या अनुभवेन च अनुगमय्य तद्विषयकं मिथ्याभूतमभ्यासं त्यक्त्वा स्वस्य परस्य हितार्थं सदुपयोगं कुर्यात् सः धन्यः, यद्यपि ईदृशं भावं सम्पन्नाः स्त्रियः पुरुषाः,'विरलाः परन्तु निर्मलया परिणत्या विना कल्याणमपि नास्ति।

"नरक द्वार नारी नित जाणो, तेथी राग हिये नवि आणो" याः शास्त्रे निर्दिष्टाः स्त्रियः दुर्गुणाः ते पूर्वे कथिताः " स्त्रियाः नरकसाधनं मत्वा तस्याम् रागमोहासक्तयः च न कर्तव्याः इति; तथा सदा दत्तचित्तैः भवितव्यम्, यदि यूयं क्षणम् अपि आसक्ताः जाताः अन्ते युष्माकं नरकस्य अनन्तदुःखदावानले ज्वलनं भविष्यति तत्रापि अपवादः वर्तते; पूर्वं स्त्रीरत्नानि जातानि अधुनापि भवन्ति भविष्यन्ति च। कदापि स्त्रियाः संगमः न कार्यः इति सामान्यनियमः। तदुक्तं हितोपदेशे—

घृतकुम्भसमा नारी, तप्तांगारसमः पुमान्। तस्माद् घृतञ्च वह्निञ्च, नैकत्र स्थापयेद् बुधः॥

"अन्तर लक्ष रहित ते अंध, जानत नहि मोक्ष अरु बंध"। कैः कैः कारणैः आत्मा मुक्तः भवति कैः कैः च आत्मा बद्धः भवति तेषां यथार्थज्ञानम् एव आभ्यन्तरं लक्ष्यम्, तत् येषां नास्ति ते खलु अन्धाः, तादृशाः आभ्यन्तरलक्ष्यहीनाः जनाः क्रियां कुर्वन्तः सन्तः अपि बन्धनयुक्ताः भवन्ति संसारचक्रे च अटन्ति। तर्हि आभ्यन्तरलक्ष्ययुताः जनाः सत्कर्म कुर्वन्तः सन्तः सद्य एव ससारं तीर्त्वा मोक्षपदं प्राप्नुवन्ति, यथा अन्धः चक्षुषा विना इतः ततः परिभ्रमन् अपि वाञ्छितं स्थानं गन्तुम् अशक्तः तथा धर्मकर्म कुर्वतः अपि उपयोगशून्यस्य जनस्य अभ्यन्तरलक्ष्येन विना दुर्गतिः भवति। यस्य नरस्य स्वस्य परस्य जडस्य चेतनस्य च गुणानां दोषाणां च यथार्थरूपेण ज्ञानम् अभूत् सः आभ्यन्तरेण लक्ष्येन आत्महितं साधयितुं समुद्यतः सन् सद्य एव नित्यसुखं साधयति, अतः सर्वेषां मोक्षार्थिनाम् आभ्यन्तरं लक्ष्यम् आवश्यकम् अस्ति।

"जे नवि सुणत सिद्धान्त वखाण, बधिर पुरुष जगमें ते जाण" । यः सर्वज्ञेन वीतरागेण भगवता प्रणीतं सिद्धान्तवचो न शृणोति वा श्रुतमपि तत् न मनसा चिन्तयति वा श्रुतम् अश्रुतवत्करोति तमेव ज्ञानिनो बधिरमामनन्ति । आप्तवचनामृतास्वादस्य कृते अमूल्यावसरे प्राप्ते सत्यपि एवं श्रवणेन्द्रियस्य उपस्थितौ अपि सः मन्दभाग्यः प्रमादवशात् तस्य अपूर्वलाभग्रहणं विस्मरति । यस्य पुनः भाग्यहीनस्य जन्मतः एव श्रवणेन्द्रियवैकल्येन जिनवाणीश्रवणस्य न शुभसमयः हस्तगतः तस्य दोषः एव कः ? तस्य हृदये शास्त्रश्रवणस्य इच्छा अवश्यं जायते, किन्तु सामग्र्यभावेन मनोरथसिद्धिः न भवति । किन्तु यः कश्चित् सत्याम् अपि सर्वसामग्र्यां तस्याः सदुपयोगं न करोति अर्थात् जिनागमवचनं न शृणोति सः भावबधिरजनः एव वास्तविकः अपराधी । एतादृशस्य जनस्य अपूर्वं जन्म व्यर्थम् एव गतं भवति, तेन अग्रजन्मनि अपि न महालाभस्य जिनवाणीश्रवणादिकस्य अवसरः प्राप्यते । इति निश्चयः ।

"अवसर उचित बोली नव जाणे, ताकुं ज्ञानी मूक वखाणे" समयोचितं हितकरं वचः स्वस्य परस्य च लाभदायि स्यात् । अनुचितम्—अहितकरं स्वस्य परस्य च हानिकरं न स्यात् इति समये अनुकूलवचनं न वदति वा वक्तुं न शक्नोति वा वक्तुं समुपेक्षते तमेव ज्ञानिनः मूकं कथयन्ति । तदुक्तं कविवर्य्येण—

अवसरपठिता वाणी, गुणगणरहितापि शोभते पुंसाम् । भवति सभाजनमनसः संतोषायात्मलाभाय ॥

समयोचितं वचनं मूल्यवद्भवति लक्षसंख्यकस्य अपि वचनस्य समतां करोति समये व्यतीते तु अतिहितानि अतीव कर्णमधुराणि वचांसि उक्तानि सन्ति अपि निष्फलानि भवन्ति । यस्य आजीवनं रसना एव नास्ति वा रोगादिभिः मूकः सः वक्तुं न शक्नोति, तस्य न महान् अपराधः सः तु दैवहतः वर्तते, तथापि तस्य मनसि यथावसरं किम् अपि समुचितं वक्तुं इच्छा जायते, किन्तु दीनः सः वक्तुं न

शक्तिमान् परन्तु यः सत्यामपि रसनायां समयोचितं न वदति अपि तु अविचारि एव अनुचितं प्रतिकूलं वदति सः महान् अपराधी अस्ति । प्रियं पथ्यं हितं वचनमेव स्वस्य परस्य हित साधयति तद्विरुद्धं तु हानिकरं भवति । कटुवचनवदनशीलः जनः अन्यजन्यकृतानादरस्य पात्रं भवति अतः स्वस्य परस्य हितं भवेत् तादृक् मिष्टं सत्यं वचः वक्तुमावश्यकम् अस्ति ।

"सकल जगत जननी है दया, करत सभी प्राणीकी मया"—दया, अहिंसा इत्यादय एकार्थाः, दया जगद्वत्सला जननी अस्ति, जगति देवेषु मनुष्येषु पशुषु सुख दृश्यते, सः दयायाः प्रतापः । दयायाः महिमा अचिन्त्यः निःसीमः च अस्ति, दया एव इन्द्रादिभ्यः सुखं ददाति च अन्ते आत्मानं सदा सुखिनं करोति, देहधनानां मोहं परित्यज्य दयालोः भगवतः वचनेन परमार्थभावेन अहिंसाधर्मस्य अनुष्ठानाय यः सदुद्यमः क्रियते स· महान् कल्याणकर्ता भवति । जगति जीवाः सुखशान्तिम् अनुभवन्ति, तत् पूर्वजन्मनि कृतस्य अहिंसाधर्मस्य फलम् अस्ति । तथा ये अहिंसाधर्मं पालयन्ति पालयिष्यन्ति च ते ऐहिकं सुखम् अनुभूय अक्षयं सुखम् अपि प्राप्स्यन्ति इति सुखदा पालनकर्त्री सर्वेषां जननी= जगदम्बा अहिंसा एव अस्ति इति ज्ञात्वा सुखार्थिभिः प्रतिक्षणम् अहिंसाजगदम्बा आराध्या, तस्याः अनाराधनं कुपुत्रवत् न कर्तव्यम्, अस्य पथो ये अनुयायिनः ते अवश्यमेव सुखिनः भविष्यन्ति ।

"पालनकर्ता पिता ते कहिये, तेनो धर्म चित्त सद्दहिये" पालनपोषणकर्ता पिता, सः तु एकस्मिन् जन्मनि एव पिता किन्तु जन्मान्तरेषु अपि यः सर्वथा पालयति, अस्माकं हितं करोति, अस्मासु स्निह्यति, दुःसहमपि दुःखं निवारयति, अन्ते दुर्गतिदावाग्निना रक्षित्वा सद्गतौ नियोजयति सः एव धर्मः पिता, तस्य एव महानुपकारः इति अपरिमितः उपकारः कदापि विस्मृतः न स्यात्, अनीतिमार्गात् निवारयति, नीतिमार्गे योजयति, अस्तेयं शीलं सन्तोषादीन् सम्यगुपदिश्य सर्वेभ्यः पापेभ्य. मोचयित्वा निर्मलानि चरितानि उपदिशति, तत्रैव अस्मान् दत्त-

चित्तान् कृत्वा परमानन्दं प्रकाशयति, सः पूज्यः धर्मपिता एव आश्रयितुं योग्यः, शरण्यः अस्ति, जगति जन्मदाता पिता, जन्मदा माता, सहोदरः भगिनी च सर्वे स्वार्थसमन्विताः, ते स्वार्थान्ते वा स्वार्थान्तराये संप्राप्ते सति सर्वथा तिरस्कुर्वन्ति। किन्तु सत्यस्य धर्मस्य पितुः सम्बन्धः निःस्वार्थः एकान्ततः महासुखदायो च अस्ति। अतः चित्ते दृढां श्रद्धां कृत्वा कल्पितसंसारिकमिथ्यासंबन्धरहितः सन् धर्मेण सह स्थासिसम्बन्धाय प्रयतमानमानसः भवेदिति सारः।

मू०—"मोह समान रिपु नहि कोई, देखो सहु अन्तर गत जोई; सुखमें मित्त सकल संसार, दुखमें मित्त नाम आधार" ॥२५॥
मोहतुल्यो रिपुर्नास्ति, पश्यान्तः सुविचार्य च; दुःखोदये भवेत्पार्श्वे, तन्मित्रं सुखिते नहि ॥ २५ ॥

मू०—"डरत पापथी पण्डित सोई, हिंसा करत मूढ सो होई; सुखिया सन्तोषी जगमांही, जाकुं त्रिविध कामना नांही" ॥२६॥
पण्डितः पापतो भीरुर्हिंसको मूढ इष्यते, त्रिविधैर्निर्गतः कामैः, सुखी सन्तोषवांश्च यः ॥ २६ ॥

मू०—जाकुं तृष्णा अगम अपार, ते म्होटा दुःखिया तनु धार; भये पुरुष जो विषयातीत, ते जगमांहे परम अभीत ॥ २७ ॥
अपारतृष्णया विष्टः, स महादुःखवान् नरः। अभूद् यो विषयातीतः, सोऽभीतः सर्वथा स्मृतः ॥२७॥

मू०—मरण समान भय नहि कोई, पंथ समान जरा नहि होई। प्रबल वेदना क्षुधा वखाणो, वक्र तुरंग इन्द्रि मन जाणो ॥२८॥
मृत्योस्तुल्यं भयं नास्ति, न पथः सदृशी जरा। प्रबला वेदना क्षुद्वै, वक्रोऽश्वो मनः—इन्द्रिये ॥ २८ ॥

मू०—कल्पवृक्ष संयम सुखकार, अनुभव चिन्तामणि विचार; कामगवी वर विद्या जाण, चित्रावेली भक्ति चित्त आण ॥ २९ ॥
संयमः कल्पवृक्षोऽनु—भवश्चिन्तामणिः स्मृतः; कामधेनुस्तु सद्विद्या, भक्तिश्चित्रात्मतोपमा ॥ २९ ॥

मू०—संयम साध्या सवि दुःख जावे, दुःख सहु गया मोक्ष पद पावे; श्रवण शोभा सुणीये जिनवाणी, निर्मल जिग गंगाजल पाणी ॥
संयमैर्दुःखमत्येति, निर्दुःखो मुक्तिमेति च; श्रवणं जिनवाणीनां, भूषणं श्रवसोः स्मृतम् ॥३०॥

मू०—नयन शोभा जिनबिम्ब निहारो, जिनपडिमा जिन सम करी धारो; सत्य वचन मुख शोभा सारी, तज तंबोल संत ते वारी ॥
जिनबिम्बेक्षणं शोभा, नेत्रयोः समुदाहृता। सत्यं संशोभयत्यास्यं, न ताम्बूलादिभक्षणम् ॥३१॥

मू०—करकी शोभा दान वखाणो, उत्तम भेद पंच तस जाणो; भुजाबले तरिये संसार, इण विध भुज शोभा चित धार ॥३२॥
पञ्चधा दानमाख्यातं, करयोर्भूषणं महत्। यद्बलैस्तीर्यते सिन्धुः, संसारः कठिनो महान् ॥ ३२ ॥

मू०—निर्मल नवपद ध्यान धरीजे, हृदय शोभा इणविध नित कीजे। प्रभुगुण मुक्तमाल सुखकारी, करो कंठ शोभा ते भारी ॥३३॥
नवानां पदानां हृदि ध्यानमेव, हृदो भूषणं ध्यायतामर्हणाय।
गुणा आर्हता मुक्तमालोपमास्तान्, कुरुध्वं सदाऽभ्यासमन्तःसुखाय ॥ ३३ ॥

"मोह समान रिपु नहि कोई, देखो सहु अन्तरगत जोई" मोहतुल्यो रिपुर्नास्ति, पश्यान्तः सुविचार्य्य च। मोहेन सदृशः अन्यः कः अपि महान् शत्रुः नास्ति इति आत्मनि एव विचार्यम्, रागः द्वेषः कषायः विषयलालसा ममता च मोहस्य अङ्गानि, जीवं विविधैः उपायैः त्रस्तं कृत्वा उपहसन्ति, अहमस्मि, इदं मम इति मन्त्रेण सर्वं जगदन्धीकृतमस्ति, एतदेव मन्त्रं जगति जीवाः ध्यायन्ति, परन्तु तस्मात् कियत् महत् दुःखं जायते, इति तु विरलाः जानन्ति। पुनः पुनः जन्ममरणानां प्रबलानि कारणानि राग—द्वेष—मोहादयः एव, तेषां विनाशे सति सद्यः एव जन्ममरणानि विनश्यन्ति, इदं तत्त्वम् शास्त्रेण गुरुणा स्वानुभवेन वा ममात्मा प्रमादवशेन मोहादिकस्य शत्रोः पाशे बद्धः अस्ति तम् आत्मानं मुमुक्षि-

तुम् अत्यावश्यकम् अस्ति, उपेक्षितुम् नो योग्यम् एतत् कार्यम् । यदि स्वीयं स्वरूपं ज्ञातं स्यात् तदा वयम् एव ज्ञास्यामः स्वीयाभिः महतीभिः च्युतिभिः एव वद्धाः स्मः, तर्हि वयं यदि जागृताः स्यामः शत्रून् पराजितान् कुर्मः तदा ते तु पलायिष्यन्ति, अस्माकम् अस्मदियं चरितम् उन्नतं समादरणीयं स्यात् इति एवं सति मोहादिशत्रवः स्वयम् एव सभयाः सन्तः पलायिष्यन्ति सद्यः ।

"सुखमें मित्त सकल संसार, दुःखमें मित्त नाम आधार" दुःखोदये भवेन्मित्रम् तन्मित्रं सुखिते नहि । पूर्वपुण्येन संपदि सत्यां सर्वे मित्राणि भवन्ति, किन्तु अन्तराययोगेन आपदि संप्राप्तायां सत्याम् हितचिन्तकाः तत्र साहाय्यदायकाः विपद्भ्यः त्रातुं पूर्णप्रयत्नवन्तः एव सत्यतया मित्राणि सन्ति, प्रश्नोत्तररत्नमालायां दत्ते एतत्प्रश्नोत्तरे मननम् अत्यन्तम् एव आवश्यकम् अस्ति । तद् इदम् जीवं भाविन्याः भीमायाः आपदः रक्षेत् सदुपदेशेन भाविदुःखं विज्ञापयति पापाचारतः निवर्तयेत्, सन्मार्गम् उपदिशेत् सः एव सत्यरूपेण मित्रम् अस्तीति जानीयात्, अन्यत् मित्रं तु केवलं साम्प्रतम् एव भवे साहाय्यम् आदधाति, सन्मित्रं तु उपर्युक्तं परलोके अपि साहाय्यं करोति, अतः मोक्षार्थी जनः मित्रं यदि कुर्यात् तदा एतद् रूपम् एव मित्रं कर्तुं लक्ष्यं रक्षेत्, यतः किं मित्रं यत् निवर्त्तयति पापात् ।

"डरत पापथो पंडित सोई" पण्डितः पापतः भीरुः। यः पापाचाराद् बिभेति । सदाचारानुष्ठानं सदैव कुरुते सः पण्डितः । प्रश्नोत्तररत्नमालिकायाम् अस्य प्रश्नस्य इदम् उत्तरं विद्यते, कः पण्डितः ? विवेकी यस्य हृदये विवेक. जागृतः अस्ति तस्य विवेकस्य बलेन जडस्य चेतनस्य पुण्यस्य पापस्य आश्रवस्य संवरस्य बन्धस्य मोक्षस्य निर्जरारूपस्य इति नवतत्त्वानां यथार्थः निर्णयः यस्य जातः यथार्थेन तत्त्वनिर्णयेन अचला तत्त्वश्रद्धा जाता अतः आगामिनि काले आत्मनः अनर्थकारिण्याः पापवृत्त्याः बिभेति तथा आत्मनः हिते मार्गे प्रवर्तते, यथाशक्ति अन्यान् अपि तथैव उपदिशति सः पण्डितनाम अलङ्करोति । पण्डितलक्षणं विष्णुशर्मणा इत्थम् अभ्यधायि—

मातृवत्परदारेषु, परद्रव्येषु लोष्टवत् । आत्मवत्सर्वभूतेषु, यः पश्यति सः पण्डितः ॥

"हिंसा करत मूढ सो होई," हिंसको मूढ इष्यते । जगतः एकान्ततः सुखदायाः दयावृत्तेः विरोधिनीम् हिंसावृत्तिं ये अङ्गीकुर्वन्ति परमकृपालुना परमात्मना जगति जीवानां हितार्थम् उपदिष्टं मार्गम् अनादृत्य स्वमत्या तद्विरोधिनीं वृत्तिं सेवन्ते तान् महतः विदुषः तत्त्वदर्शिनः मूर्खकोटौ गणयन्ति, ते शुष्काः पण्डिताः. ध्यानेन न एतद् विचारयन्ति यत् सर्वे जीवाः जीवितं वाञ्छन्ति मरणं तु न कदापि कः. अपि समीहते, ये आत्मवत् सर्वभूतेषु दयाभावेन न पश्यन्ति दुःखम् अस्मभ्यं यथा न रोचते तथा सर्वजीवेभ्यः, तर्हि यद् अस्माकं प्रतिकूलं तत्परेषाम् अपि एवं च तत्प्रयोगः तेषाम् उपरि कथं करवामः इति मुहूर्त्तमात्रं यदि साम्यभावेन विचारयेयुः तदा निर्दयात्कामादवश्यं पृथक् भवेयुः, यथा यथा च अस्य विषयस्य पूर्णदयार्द्रभावेन विचारः भवति तथा तथा निर्दयकर्मकरणे मनः कम्पते, अन्ते निर्दयं कर्म स्वयम् एव न जायते । ये मूढाः राक्षसाः रसनायाः लोलुपतया मांसं भक्षयन्ति मृगया च कुर्वन्ति ते कठोरहृदयनरपशवः स्वसमीपे मरणाय समागतपशूनां करुणार्द्रभावं न पश्यन्ति किम् ? किं ते दीनाऽनाथपशवः स्वबालकादिम् उद्दिश्य क्रन्दन्तः तेषां नरदैत्यानां सविधे सुखेन आगन्तुम् इच्छन्ति ? यथा निर्दयभावेन तेषां दीनपशूनां बालाः स्वयं च हन्यन्ते तथा यदि नरपशूनां हिंसकानां प्रियवस्तुनि बालाः बालिकाः स्त्रियः वा हन्येरन् तदा कियान् त्रासः स्यात् ? मन्ये पशोः अपेक्षा अधिकं कष्टं तेषां भवेत् । ते दयाहेतवे केषां समीपे प्रार्थनां कुर्वन्तु ? इयं भारतभूमिः दयायाः प्रतापेन पुरा दयार्द्रा पूता यथा आसीत् तथा न साम्प्रतम्, अधुना तु खलानां नीचानां पाश्चात्यमतभरितां संसर्गेण निर्दया अपवित्रा जाताऽस्ति, केवलं निर्दयाः एव अत्र शासकाः । यदि एषाम् उन्मूलनाय पुरुषार्थः क्रियेत तदा पुनर् अपि इयम् आर्यभूमिः पूर्ववत्सर्वतः शोभेत इति स्वजनन्याः भारतभूमेः उद्धारार्थं सर्वैः भारतवासिभिः गवादिहिंसाप्रतिषेधाय प्रयतितव्यम्, स्वराज्यप्राप्त्या देशः

धिकगमनेन अतीव श्रान्त. भवति। तदुक्तमस्ति विदुषा केन अपि—अध्वा जरा मनुष्याणा–मनध्वा वाजिनां जरा। तेन सद्यः अनुपेक्षणीयम् अपि कार्यं कर्तुं न शक्नोति, यदगत्यं कर्तव्यम् अस्ति तत्र अपि आलस्ययुक्तः भवति। अतः अनुभविनः वदन्ति, कियान् अपि महान् प्रवास· शनै. शनैः प्रतिदिन यदि चतुर्षु चतुर्षु क्रोशेषु उषित्वा गच्छेत् तदा सः महान् मार्ग· लघुः इव भवति. अनेन वचनेन चत्वारः क्रोशाः एव गन्तव्याः एकस्मिन् दिने नत्वधिकाः यस्माद् भाविनि काले कष्टं न स्यात्, एवं व्यावहारिके धार्मिके च कर्मणि बाधा न स्यात् ॥

"प्रचण्ड वेदना क्षुधा वखाणो" प्रवला वेदना क्षुद्वै। सर्वाभ्यः वेदनाभ्य· अधिका प्रबला वेदना क्षुधा, अन्याभ्यः वेदनाभ्यः प्रायः मनसि वैराग्यं जागर्ति वा प्रभुः स्मृतिविषयः भवति वा परभवस्य हिताय मनसि प्रेरणा जायते क्षुधायाः समुदये तु सर्वं विस्मृतं भवति, तां क्षुधां सोढुं क्षमाः विरलाः ज्ञानिनः तपस्विनः साधवः भवन्ति, तादृशाः समदर्शिनः शिरसा सदैव वन्द्याः सन्ति, शास्त्रोक्तं तपः इमां वेदनां सान्त्वयितुं क्षमम् अस्ति। 'बुभुक्षितः किं न करोति कर्म ? ॥' अत्र एकं सूक्तं सर्वथा अभ्यसनीयम् अस्ति, पठ्यताम् अग्रः—

शय्या वस्त्रं काञ्चनं चारुगन्धः, वीणा वाणी सदृशी चापि नारी। न भ्राजन्ते क्षुत्पिपासातुराणाम्, सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥
क्षुधा नो यदि संसारे, को न मोक्षमवाप्नुयात्। क्षुधया पीडिता जीवाः, पथभ्रष्टा भवन्ति नु ॥

"वक्र तुरंग इन्द्रिय मन जाणो" वक्रोऽश्वो मन इन्द्रियम्। शास्त्रेषु मनःप्रभृतीनि इन्द्रियाणि वक्रगतयः रथ्या इव उक्तानि, यथा वक्रगतिरथ्य सारथिम् अपरिचिते भीमे पथि बलाद् आकृष्य विडम्बनापात्रं करोति. किन्तु अश्वविद्यायां निपुणः कश्चित् सारथिः तं रथ्यं नियम्य स्वल्पे एव समये स्वामिनः स्थाने नयति, तथा आसक्तानि मनःप्रभृतीनि इन्द्रियाणि यथेष्टं विषयेषु रमन्ते आत्मानं विविधैः उपायैः दुःखिनं कुर्वन्ति अन्ते दुर्गतौ निक्षिपन्ति। यदीन्द्रियाणि सर्वज्ञस्य प्रभोः उपदेशेन नियन्त्रितानि स्युः तदा सन्मार्गे प्रचलन्ति स्वामिनम् अन्ते

सद्गतौ निक्षिपन्ति । तदुक्तं गीतायाम्—मन एव मनुष्याणां कारणं बन्धमोक्षयोः। अतः मनः संयमनीयम् मुमुक्षुणा। अतः शास्त्रकारः उपदिशति यदि यूयम् जन्ममरणादिभ्यः विविधेभ्यः त्रासेभ्यः सभयाः स्थ तत् नित्यम् अचलं मोक्षसुखम् अभिलषतः तदा प्रबलं पुरुषार्थं सेवध्वम्, विषयेषु जितेषु सत्सु सर्वं दुःखं सान्तं भवति, अतः ज्ञायते यत् सुखप्राप्तेः कश्चन उपायः यदि स्यात् तर्हि शास्त्रोक्त्या युक्त्या मनःप्रभृतीनाम् इन्द्रियाणां नियमनम् एव, अतः तद् एव समादरणीय सद्भिः॥

"कल्पवृक्ष संयम सुखकार" संयमः कल्पवृक्षोऽस्ति। यथा सर्वेषु वृक्षेषु कल्पवृक्षः उत्तमः देवतरुर्भण्यते, तस्य छाया मूलं पत्रं पुष्पं फलमिति सर्वाणि उत्तमानि तथा संयमः सुखनिधिः सर्वेषां सुखानामाकरः अस्ति। वीतरागस्य प्रभोः वचनेषु अचला श्रद्धा एव संयमस्य मूलम् अस्ति, यम-नियमादयः पत्राणि सन्ति,समाधिः छायाऽस्ति, देवमनुष्यादेः उत्तमा गतिः तस्य सुगन्धीनि पुष्पाणि सन्ति, मोक्षसुखं सर्वोत्तमं फलम् अस्ति, एवंविध संयमं को न अभिलषेत्? किन्त्वनादिकालात् आत्मक्षेत्रे समुत्पन्नमिथ्यात्वज्ञानम् अविरतिः इत्यादीन् दुर्गुणात्मकान् सद्यः जातान् बालवृक्षान् समूल छित्वा हृदयक्षेत्रस्य शुद्धयर्थम् अक्षुद्रतादिकां योग्यतां सम्पादयित्वा सर्वज्ञेन उपदिष्टस्य संयमस्य अवन्ध्य बीजं श्रद्धाञ्च समुप्याथ तत्र ज्ञानामृतस्य सेकः क्रियते तत्र तदा सुखदाः यमनियमादयः संयमयोगाः प्रादुर्भवन्ति, तेनैव कारणेन स्वर्गस्य मोक्षस्य च उत्तमोत्तमानि सुखानि प्राप्नुवन्ति, अतः आत्मार्थिभिः कथिता सेविता च दिक् सेव्या॥

"अनुभव चिन्तामणि विचार" अनुभवश्चिन्तामणिः स्मृतः। अनुभवात्मकं ज्ञानम् अमूल्यं रत्नमस्ति, तेन इष्टं सुखं साध्यते। तदुक्तं शास्त्र-कारेण—वस्तु विचारत ध्यावत मन पावे विश्राम, रसस्वादन सुख ऊपजे अनुभव याको नाम। संस्कृतानुवादः—

वस्तुध्यानविचाराभ्यां मनो विश्राममेति च। रसस्वादैः सुखं स्याच्चेदनुभवः सोऽत्र कथ्यते॥

तु उद्धृतः किन्तु सर्वोद्धारनिदानधर्मोद्धारस्य उपरि न विचारः क्रियते अपि तु भारतीयधर्मविरुद्धविधानमेव आश्चयन्ति इति महाखेदस्य विषयः। हिंसाम् उद्दिश्य सूक्तम् इदं कियत्सुन्दरम्—

**मर्तव्यमिति यद् दुःखं, पुरुषस्योपजायते। शक्यस्तेनानुमानेन, परोऽपि परिरक्षितुम् ॥**

"दुखिया सन्तोषी जगमांही, जाको त्रिविध कामना नांही;" त्रिविधैः निर्गतः कामैः, सुखी सन्तोषवान् नरः। येषां कापि विषयवासना नास्ति ते सन्तोषिनः साधवः एव सुखिनः सन्ति। विषयलालसा एव दुःखम्। यथा क्षुधा पिपासा इत्यादयः दुःखानि तत् शान्त्यर्थम् अन्नपानादीनाम् उपचारः क्रियते तस्मिन् यथा विधिकृते दुःखं शाम्यति, यदि अन्नपानादिकम् अधिकं सेव्यते तदा प्रतिकूलं सत् उपाधिं नानाविधं जनयति तेषां शमनार्थं विविधाः उपायाः कर्तव्याः भवन्ति। तथा विविधा विषयवासना अपि दुःखम् एव तद् दुःखम् उपशान्तयितुं शास्त्रनीत्या योग्यस्य प्रतिकारस्य यथाविधि संपादनस्य आवश्यक्ता अस्ति। तत्र यदि अतिचारः जायते तदा विरुद्धं दुःखम् एव विवर्धते। मनोवाक्कायाना विकारान् उपशान्तयितुं शास्त्रकृतसम्मत्यादिकं मुनिधर्म स्वस्त्रीसन्तोषादिकं गृहस्थधर्मम् उपदिशति। त सम्यक् सद्गुरोः ज्ञात्वा तद् अनुरूपम् अनुष्ठानं कुर्वन् जनः विविधाभिः कामनाभिः मुक्तः भवति सा मुक्तिः सुखस्य पराकाष्ठा, मुक्तिरेव सुखं लिप्सुभिः समादरणीया। उक्तञ्च—"**न तेषां परमं सुखं सन्तोषेण समं सुखं नास्ति न तृष्णायाः परो व्याधिः अतः शास्त्रोपदेशका वदन्ति अजितेन्द्रियत्वम् आपदः पन्थाः जितेन्द्रियत्वं संपदः पन्थाः अनयोर्यः श्रेयान् तत्रैव गन्तव्यम्।**" सूक्तमत्र—सर्पाः पिबन्ति पवनं न च दुर्बलास्ते, वन्यैः फलैर्मुनिवरा हि वसन्ति सौख्यैः, शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति, सन्तोष एव पुरुषस्य परं निधानम् ॥

'जाकुं तृष्णा अगम अपार, ते म्होटा दुखिया तनु धार।" अपारतृष्णयाविष्टः स महान् दुःखवान् नरः। यस्य तृष्णा अनन्ता तस्य

दुःखम् अपि अनन्तम् अस्ति ज्ञानिनः लोभतृष्णयोः क्रमशः अग्निज्वालयोः उपमानोपमेयभावं प्रदर्शयन्ति । यथा इन्धनादिभिः अग्निः प्रदीप्तः भवति तस्य ज्वाला अपि अतीव प्रदीप्ता भवति, तथा लोभी लाभयोगेन अन्धः भूत्वा तृष्णाम् अमर्यादितां कुरुते; तृष्णा लोभान्धम् अतीव दुःखिन करोति, ईदृश. दुःखदावाग्नेः स्वात्मरक्षणम् इष्टं यस्य स्यात् सः लोभान्धतां परित्यज्य तृष्णां मर्यादितां कृत्वा सन्तोषादिवृत्तिम् अभ्यसति सः सुखी भवति ।

"थया पुरुष जे विषयातीत, ते जगमांही परम अभीत " अभूद् यो विषयातीतः सोऽभीतः सर्वथा स्मृतः । ये सन्तोषिणः अभ्यासयोगेन विषयवासनाम् उन्मूलितवन्तः तेषां जगति किम् अपि भयं नास्ति, अतः ते जीवन्मुक्ता. तेषां पुनर्जन्मापि न विद्यते, अन्ते विनाशिनं देहम् अत्र त्यक्त्वा देहातीताः सन्तः नित्यम् अचलं मोक्षसुखं प्राप्नुवन्ति, अतः तेषां जन्ममरणादीनां दुःखं न भवति यावद् रागादयः विकाराः जागृताः तावत् जन्मादिसम्बन्धः वर्तते एव, यावत् विषयातीताः तावत् किम् अपि भयं न भवति इति ज्ञात्वा प्राज्ञै. मनःप्रभृतीनि इन्द्रियाणि संयम्य संयमिभिः सद्भिः विषयातीत निर्भय पदम् अधिगन्तुं विषयवासनाया. विनाशाय सततं प्रयतनीयम् ।

"मरण समान भय नहि कोई " मृत्योस्तुल्यं भयनात्र । जगति मरणम् एव महद्भयम् अस्ति तत्सत्यं तेन एव अन्यानि जन्मजरासंयोग-वियोगाधिव्याध्युपाधीनां भयानि सन्ति । यदि मरणरूपात् महतः भयात् मुक्त्यर्थम् एव परमात्मना दर्शनज्ञानचरितादयः उत्तमाः मार्गाः निर्दिष्टाः तदा तां रत्नत्रयीं सेवमानः आत्मार्थी जनः अवश्यम् एव महतः भयात् त्रातः भविष्यति, अतः निर्भय सुख लिप्सोः इदम् एव कर्तव्यम् अस्ति ।

"पंथ समान जरा नवि होइ" न पथः सदृशी जरा । यथा जरया शरीरं जर्जरं भवति यौवनवत्सामर्थ्यम् उल्लासः च न स्तः तथा अत्य-

अमुकं वस्तु विचारयत् ध्यायन्मनः शीतलं भवति, तस्य रसस्वादै स्वाभाविकं सुखं यदनुभूयते सोऽनुभवः। शास्त्रं तु दिशः निर्देशं करोति तस्य अन्तः स्वानुभववेद्य अस्ति अनुभवः केवलं ज्ञानात्मकः सूर्यस्य अरुणोदय अस्ति, कस्य पात्रं शास्त्रक्षीरे न पतति परन्तु अनुभवरूपया रसनया शास्त्रक्षीरं आस्वाद्यमस्ति तदास्वादयन्तः विरलाः सन्ति । इमानि सूक्तवचनानि अनुभवस्य अपूर्वं महिमानं प्रदर्शयन्ति, अतः स्वीयम् आत्मतत्त्वं साक्षात्कृतं स्यात् तादृशे अनुभवाय प्रयतितव्यम् इति ॥

"कामगवी दर विद्या जाण" कामधेनुस्तु सद्विद्या । अत्र सद्विद्या कामधेनु. इव सुखदायिनी उक्ता, यथा कामधेनुः सर्वकामनापूर्तिं करोति तथैव सद्विद्यापि, 'तत्त्वधीर्विद्या' इति वचनानुसारेण वस्तुनो यथार्थ स्वरूपं यया विद्यया ज्ञातुं शक्यते सा सद्विद्या, तद्भिन्ना अविद्या इति स्पष्टं लक्षणमुक्तम् । अनित्यम् अशुचि परवस्तु, नित्यं शुचि स्वकीयं वस्तु इति या अविद्या मिथ्या भ्रान्तिः वा अज्ञानं तद्दूरीकर्तुं प्रयतितव्यम्, इत्येवावश्यकम्, तद्विना कामधेनुसमाना सद्विद्या न भवितुमर्हति, अतः आत्मार्थिभिः सद्गुरोः सद्विद्यां प्राप्तुं प्रयतितव्यम्, येनात्मकल्याणं भवेत् ॥ सत्यां हि सद्विद्यायां पारलौकिकं सुखं तु भवति एव, किन्तु इहलौकिकम् अपि, उदरभरणादिकं सम्यक् चलति सद्विद्याय यदि का चिन्ता वराकोदरपूरणे ?। शुक. अपि अशनमादत्तेऽर्हन्देव इति ब्रुवन् ॥

"चित्रवेली भक्ति चित आण" भक्तिश्चित्रलतोपमा । चित्रलता भक्तिः इव उक्ता, यथा चित्रलतया सिद्धिः भवति तथा भक्त्या भव्यानां जनानां मनःकामना पूर्णा भवति, तथाच स्वर्गापवर्गौ अपि प्राप्नुतः, अन्यसाधनेषु भक्तिसाधनं सुलभम् उत सुखदम् अपि, अन्यसाधनेषु मदस्य संभवः भक्तौ तदवकाश एव नास्ति, भक्त्या नम्रत्वादिगुणगणः प्रतिदिनं वर्धते । भक्तौ रसिकाः जीवाः आत्मानम् अपि विस्मृत्य भगवत्स्वरूपाः भवन्ति, अतः अनेके भक्ताः भक्तिमार्गं गताः सन्ति ।

"संयम साध्यां सवि दुःख जावे दुःख सहु गयां मोक्ष पद पावे" संयमैर्दुःखमत्येति निर्दुःखो मुक्तिमेति च। संयमो नाम आत्मनिग्रहः, अनादेः अविद्यायाः योगेन जीवः उन्मार्गे गतः असत्ये हिंसायां अदत्ते अब्रह्मणि परिग्रहे लुब्धः जातः अस्ति, इन्द्रियैः वशीकृतः क्रोधादिकान् कषायान् सुखमत्यासेवते, मनोवाक्कायानां यथेष्टेषु व्यापारेषु सुखं मन्यते, तदीयां प्राचीनां च्युतिं समुद्धृत्य सन्मार्गे प्रवर्तयेत्, अहिंसा सत्यं ब्रह्मचर्यम् अस्तेयं निःस्पृहत्वमिति महान्ति व्रतानि यथाविधि सेव्यानि, इन्द्रियाणि जेयानि, शब्द-रूप-रस-गन्ध-स्पर्शाणां विकारेण जायमाना आसक्तिः त्याज्या। क्षमया मृदुतया सरलतया सन्तोषेण कषायाः जेयाः, ज्ञानेन ध्यानेन तपसा जपेन कायस्य दुष्टानां व्यापाराणां प्रतीकारः कर्तव्यः, इति सप्तदश संयमान् यथार्थम् पालयतः भवभ्रमणादीनि दुःखानि विनश्यन्ति, तथा सकलस्य कर्ममलस्य क्षयं कृत्वा अमरः भवति।

"श्रवणशोभा सुणिये जिनवाणी, निर्मल जेम गंगाजल पाणी" श्रवणं जिनवाणीनां, भूषणं श्रवयोः स्मृतम्। गंगाजलं यथा मलरहितं तथा जिनेश्वरस्य वचः सर्वरागद्वेषमोहादिमलरहितम्, परमात्मनि उक्ताः दोषाः कदापि न भवन्ति, अतः प्रभोः वचः निर्मलम्, ईदृक् निर्मलं वचः कर्णपुटेन श्रुत स्यात् तदा तदेव श्रोत्रस्य भूषणम्, अज्ञानिनः तु स्वीयौ कर्णौ कुण्डलादिना अलंकृतौ कुर्वन्ति तर्हि तत्त्वरसिकाः तु स्वीयौ कर्णौ उत्तमैः वचोभिः अलङ्कुर्वन्ति, एवं स्वीयां सुकर्णतां साधयन्ति।

"नयन शोभा जिनबिम्ब निहारो, जिनपडिमा जिन सम करि धारो" जिनबिम्बेक्षणं शोभा नेत्रयोः समुदाहृता। यथा जिनवचसः श्रवणं कर्णयोः भूषणम् तथा जिनप्रतिमादर्शनम् नेत्रयोः भूषणम्, यथा जिनवचसा हृदये विवेकः जायते, प्रभोः दर्शनेन स्वरूपं साक्षात्कृतं भवति, तथैव आत्मनः स्वरूपं वर्तते, प्रभुस्वरूपस्य सान्निध्येन प्रभुतुल्याः भवामः, यदा यदा प्रभुमुद्रया प्रतीयमानानां गुणानाम् अभ्यासम् कुर्मः, स्वीयाः प्रच्छन्नाः गुणाः अपि समुदिताः भवन्ति, इति कृते सति प्रभुणा सह तादात्म्यं जायते, येन प्रभुस्वरूपाः भवामः एतादृशः उत्तमस्य सुखस्य

प्राप्ते. साधनभूते जिनवाणी जिनमुद्रा च स्त., अत एव ते भगवता जिनेश्वरेण सदृशे स्तः, इति निर्णयः भवति ।

"सत्य वचन मुख शोभा भारी, तज तम्बोल संत ते वाणी" सत्यं संशोभयत्यास्यं न ताम्बूलादि भक्षणम्। जिनप्रतिमादर्शने नयनयोः शोभा उक्ता, तथा मुखस्य शोभा हितमनोहारिसत्यवचसः उच्चारण एव भवति, केचन मुग्धाः ताम्बूलादिचर्वणे मुखस्य शोभा वर्द्धते इति मन्यन्ते तथैव कुर्वन्ति अपि सा शोभा केवलं कृत्रिमा क्षणिका अस्ति, तर्हि शास्त्रोक्तप्रकारेण सत्यं वचः मुखस्य भूषणम् । तद्भूषणं चिरस्थायि अस्ति। उपदेशमालाकारः वाग्व्यवहाराय इदमुपदिशति—वचो मधुरं स्यात् कटु न, उपपत्तिमत् निरर्थकं न, मितं स्यादमितं न, अवसरपठितं स्यात् अनवसरपठितं नहि । विनयसम्पन्नं स्यात् गर्वितं नहि, गुरु स्याल्लघु न, विचार्य्य वक्तव्यम् विचारहीनं न, परहितं सत्यं स्यात् पराहितमसत्यनहि, विवेकिनः इत्येवं सद्वचः एव वदन्ति, तदेव मुखस्य मण्डनमस्ति इति प्रश्नमालाकारेणापि उक्तम्–किम् वाचां मण्डनम्? सत्यम् इति वक्तव्यमस्ति, अस्मिन् समये लोकाः विना कारणमपि असत्यमेव भाषन्ते । असत्यभाषणम् तेषां व्यसनमेव जातम्। तैः स्वपरहितार्थम् असत्यं परित्यज्य सत्यः पक्षः समादरणीयः, तत्रैव तेषां श्रेयोऽस्ति, सत्यमेव जयति नानृतमिति सर्वदा स्मरणीयम् ।

"करकी शोभा दान वखाणो, उत्तम भेद पंच तस जाणो" पञ्चधा दानमाख्यातं करयोः भूषणं महत् । यथा सत्यं मुखस्य मण्डनम् तथा हस्तयोः मण्डनं दानम् । तत् शास्त्रे पंचविधम्—अभयदानम्, सुपात्रदानम्, कीर्तिदानम्, अनुकम्पादानम्, उचितदानम्, तदपि द्रव्यभावभेदेन द्विविधम्। लक्ष्म्यादिकेन द्रव्यसाधनेन दानम् द्रव्यदानम्, ज्ञानादिकेन भावसाधनेन दानं भावदानम् कीर्तितम्। धनादेः दुर्व्यसनेषु व्ययः दुर्गतिकारणम्, धनादेः सत्कर्मसु व्यय. सद्गतिकारणम्, तत्रापि विवेकेन हितः व्ययः कृतश्चेद् अतीव लाभदायी अस्ति, ज्ञानदर्शनचरितादीनां दानं भावदानम् कीर्त्यते, तद् भावदानं द्रव्यदानापेक्षया उत्तमं, तदुभयविधं दानं सम्यक् आराधनीयमस्ति, तदेव भाग्येन संप्राप्तायाः सामग्र्याः उत्तमं

फलमस्ति ।



शतेषु जायते शूरः, सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु, दाता भवति वा न वा ॥

"भुजा नदे तरिये संसार, इणविध भुजशोभा नित धार" यदवलोक्यते सिन्धुः संसारः कठिनो महान् । स्वीयेनैव पुरुषार्थेन संसार-सागरः तर्तुं शक्यते, तादृशौ उत्तमौ बाहू स्तः। ज्ञानदर्शनचारित्ररूपायाः रत्नत्रय्याः आराधनाय स्वीयं पौरुषगुणयुक्तं स्यात्, तदा संसारसागरः तर्तुं सुकरः, अस्मिन् जगति रागद्वेषक्रोधादिविकारवशेन स्वीयं पौरुषं प्रदर्शयन्तो बहवः सन्ति परन्तु लोकसमुदायं जित्वा रत्नत्रयीं यथाविधि आराधयन्तः विरलाः एव दृश्यन्ते, तदेव सम्यक् भुजबलम् प्रशंसनीयमस्ति, आत्मार्थिभिः स्वीयस्य पौरुषस्य सदुपयोगः कार्यः इत्येव उचितं प्रतिभाति।

"निर्मल नवपद ध्यान धरीजे, हृदयशोभा इणविध नित कीजे" नवानां पदानां हृदि ध्यानमेव हृदो भूषणं ध्यातामर्हणाय। हृदयं निवेशस्य स्थानम् अस्ति तत्तु यः संकल्पं करोति तस्मिन् विवेको जागर्ति अतो हितमहितं निश्चित्य अहितं त्यक्त्वा हिते प्रवर्तते यदा मोक्षार्थिनं जगत् असतां प्रवृत्तिं स्वीकरोति तदा विवेकिनः निवृत्तिं स्वीकुर्वन्ति, निवृत्तौ एव शान्तिः अस्ति । विना निवृत्तिं कदापि मोक्षसुखं न संभवति । समाधिः अपि न अस्ति अतः विवेकिनः समाधिस्थं शान्तमूर्तिं प्रभुं शान्त्याः अनुभवार्थं सदा अनन्यमनस्काः ध्यायन्ति च परिपूर्णेन आह्लादेन अर्हति प्रभौ लीनाः भूत्वा आत्मनः अपूर्वां शान्तिं साक्षात्कुर्वन्ति हृदयकमलं ध्यानस्य निमित्तं स्थानमस्ति तत्र भगवतः ध्यानेन क्रमेण सता अनु-क्रमेण च। ध्यानं सिध्यति; तेन ध्यातुः ध्येयस्य ध्यानस्य च तादात्म्यं जायते, तादात्म्ये जाते समता जायते; समतासुखम् अनुभविनः एव जानन्ति, तदनुभवैक। गम्यम्, अतः भव्यैः अवगम्यम् अस्ति तत्प्राप्त्युपायः अस्तु स्वीये हृदयकमले नवपदध्यानम्; आत्मार्थिभिः आराधकैः शान्तमुद्रया स्वीये हृदये तदेव ध्येयमस्ति ।

"प्रभुगुण मुक्तमाला सुखकारी, करो कंठ शोभा ते भारी" गुणा आर्हता मुक्तमालोपमास्तान् कुरुष्वं सखे! ऽभ्यासमन्तःसुखाय। मुक्तावलिः कण्ठस्य यथा मण्डनम्, तथा जिनप्रभोः ज्ञानदर्शनचरितादिगुणरूपां मुक्तावलिं कण्ठे धारणिया, भावस्तु प्रभोः गुणगणानां ध्याने कृते गाने च कृते सति कण्ठः शोभते, स्वार्थाय जीवः कं न सेवते ! दुष्टानां सेवा मोघा भवति। यः परिपूर्णः अन्यम् सेवितुमपि न इच्छति एवंविधस्य पूर्णानन्दप्रभोः गुणा गेयाः सन्ति, यस्य गुणानां गाने कृते वयमपि गुणिनः भवामः। उक्तञ्च—"जिनगुणगानवतां गुणाः सन्ति कलेवरे" उत्तमेन लक्ष्येन प्रभोः गुणान् गायन्तः जावाः प्रभुपदं प्राप्नुवन्ति, इति ज्ञात्वा दुष्टसंगं त्यक्त्वा सत्संगेन प्रभुस्वरूपं ज्ञात्वा प्रभुं चित्तेन ध्यात्वा प्रभुगुणानां चिन्तवनम् स्मरणम् अभ्यासः इत्यादिकम् कर्तव्यम्, येन अस्मासु अपि अनन्ताः गुणाः जायेरन् इति प्रतिदिनं प्रयतितव्यम्।

मू०—सद्गुरु चरणरेणु शिर धरीजे, मालशोभा इणविध भवि करीजे;
मोहजाल म्होटो अति कहिजे, ताकुं तोड अक्षय पद लहीये ॥ ३४ ॥

अनु०—शिरोधार्य्यमंघ्रेः रजः सद्गुरूणां, शिरोभूषणं तस्य तुल्यं न चान्यम्;
महाजालमेकं हि मन्यस्व मोहं, विना यस्य भङ्गेन नो मोक्षलाभः ॥३४ ॥

मू०—पापका मूल लोभ जगमांही, रोग मूल रस दूजा नांहीं;
दुःखका मूल स्नेह पियारे, धन्य पुरुष तेनाथी न्यारे ॥ ३५ ॥

अनु०—अयं लोभ एवास्ति पापस्य मूलं, रसो मूलमेकं रुजो निश्चयेन;
विना स्नेहमायाति दुःखं न लोके, ऋते स्नेहमास्ते जघन्यो जनोऽत्र ॥ ३५ ॥

मू०—अशुचि वस्तु जाणो निज काया, शुचि पुरुष जे वर्जित माया;
सुधा समान अध्यातम वाणी, विष सम कुकथा पापकमाणी ॥ ३६ ॥

अनु०—अपूतं स्वकायं सदा ज्ञेयमत्र, विना मायया नो शुचिः सर्वथा हि;
सुधाऽध्यात्मशास्त्रीयवाणी च मान्या, विषं पापकर्त्री कथा विकथापि ॥ ३६ ॥

मू०—जिहां बेठा परमारथ लहीजे, ताकुं सदाय सुसंगति कहीजे;
जिहां गया अपलक्षण आवे, ते तो सदाय कुसंग कहावे ॥ ३७ ॥

अनु०—भवेत्तत्त्वबोधो गतेनाशु यत्र, सतां संगतिः कथ्यते नैव मित्रम्;
गते यत्र शासिभैवेद् दूषणानां, कुसंगं बुधैरुच्यते सर्वदापि ॥ ३७ ॥

मू०—रंग पतंग दुर्जनका नेहा, मध्यधार जे आपत छेहा;
सज्जन स्नेह मजीठी रंग, सर्व काल जे रहत अभंग ॥ ३८ ॥

अनु०—खलस्नेहसारः पतंगस्य रङ्गैः, समो यस्तरण्यां क्षिपेदापदायाम्;
सतां स्नेहतुल्योऽस्ति माञ्जिष्ठरागः, भवेद्भंग एवेह नो सर्वदापि ॥ ३८ ॥

मू०—प्रश्नोत्तर इम कही विचारी, अति संक्षेप बुद्धि अनुसारी;

१. पुरुषः ।

अति विस्तार अरथ इण केरा, सुणत मिटे मिथ्यात अन्धेरा ॥ ३९ ॥

अनु०—प्रश्नोत्तराणि कथितानि विचार्य स्वस्य, बुध्यानुसारमतिसंकुचितानि किन्तु;
विस्तारतां गमयितुं प्रभवेयुरेव, विज्ञाः जनाः श्रवणतोऽस्य सुखानि दध्युः ॥ ३९ ॥

मू०—रस पूर्ण नंद सुचंद संवत (१९०६) मास कार्तिक जाणीअे, पक्ष उज्ज्वल तिथि त्रयोदशी वार अचल वखाणीअे;
आदीश पास पसाय पामी, भावनगर रही करी, चिदानंद जिणंद–वाणी कही भवसायर तरी ॥ ४० ॥

अनु०—श्रीमच्चिदानंदमुनिस्तुलायाः, सूर्य्येऽत्रिपुत्रात्त्रयोदशीषु;
शास्त्राम्बराङ्केन्द्रमिते (१९०६) सुसंवत्, गायन्गुणं जैनमवाप मुक्तिम् ॥ ४० ॥

**श्रीमच्चिदानन्दविरचिता प्रश्नोत्तर–रत्नमाला समाप्ता**

"सद्गुरुचरण रेणु शिर धरीए, भाल शोभा इणविध भवि करीअे," शिरोधार्यमंघ्रेः रजः सद्गुरूणां, शिरोभूषणं तस्य तुल्यं न चान्यत, सद्गुरोः चरणरजः शिरसि धृत्वा गुर्वाज्ञापालनमेव पण्डितानां कर्तव्यम् अस्ति, ललाटे तिलकस्य अपि उद्देश्यम् इदम् एव संभवति, ये तत्त्वदर्शिनः सन्तः तथापि भव्यजनानां हिताय सावधानाः सन्ति, अमलां वृत्तिं सेवमानाः सन्तः अन्यानपि तन्मार्गगामिनः कुर्वन्ति, ते भवसागरं तरन्ति तारयन्ति च, ते सद्गुरवः आत्मार्थिभिः सेव्याः । उक्तञ्च—

---

१. षट् शास्त्राणि, शून्यम् अम्बरम्, अङ्का नव, इन्द्रः एकः॥

पवित्र करो जे जीहा तुझ गुणे, शिर वहिये तुझ आण; मनसे कभी भी रे प्रभू न विसारिये, लहिये परम कल्याण ॥

अस्य संस्कृतानुवादः—

पूतां कुरुष्व जिह्वां तव गुणान् गायामि शिरसि धरामि च, मनसः कदापि न प्रभो ! विस्मृतो भव लभस्व मोक्षम् ॥

उत्तमस्य गुरोः गुणानां गानम् रसनायाः पावनम् , गुरूणाम् आज्ञापालनेन उत्तमांगं शोभते, गुरोः प्रतिदिनं स्मरणम् अन्तःकरणम्

पूतं करोति, यत जन्ममरणभयं विनश्यति अविनाशि मोक्षसुखं प्राप्नोति ।

"मोहजाल म्होटो अति कहिए, ताकुं तोड अक्षय पद लहीजे ।" महाजालमेकं हि मन्यस्व मोहं विना यस्य भङ्गेन नो मोक्षलाभः । आत्मानं

विह्वलं करोति सः मोह., ज्ञानमाच्छादयन् अशुद्धां वृत्तिं जनयन्मोहः अस्ति, रागः द्वेष असूया क्लेशः मत्सर इत्यादयः तज्जन्या एव भिन्न

भिन्नं रूप धारयन्तः, क्रोध-मान-माया-लोभादिः तस्य प्रियतमः सम्बन्धिवर्गो अस्ति, दुर्गतिकारणेषु अष्टादशपापस्थानेषु प्रवृत्तिं जनयन् मोह एव

अस्ति, सः महान् प्रसिद्ध चोरः अस्ति । सः दिनं जनानां सर्वस्वं हरति, कश्चिदात्मसाधनाय इच्छति तं सः पीडयति, वा तस्य सम्बन्धि-

वर्गः पीडयति । तत्रापि कस्यचिद् धर्मात्मनः छिद्रं दृष्ट्वा अतीव सन्तुष्ट. भवति, मोहः विविधैः प्रकारैः जगत् उपहसति, अहम् ; ममेदम् अनेन

मन्त्ररूपेण साधनेन सर्वान् अन्धीकरोति, इमं दुष्ट यावत् न जयति तावत् मोक्षः अपि न भवति, मोहे क्षीणे सति मोक्षः सद्यः भवति । तस्य

अमोघः उपाय आत्मश्रद्धा आत्मश्रवणमिति अस्याः रत्नत्र्याः आराधनमेव अस्ति, आत्मज्ञानेन स्वीयं यथार्थं रूपं ज्ञातुं शक्यते यत

स्वशक्त्याः यथार्थं भवति, आत्मविश्वासेन स्वीया शक्तिः पूर्णा प्रतीता भवति, आत्मनि ध्यानेन स्वीयायाः शक्त्याः उद्बोधे बाधकान् रागद्वेष-

मोहादीन् आभ्यन्तरान् शत्रून् दूरीकर्तुम् साधकान् सत्संगादीन् अनेकान् गुणान् सेवितुं सावधानाः भवन्ति । एवं रत्नत्रयीमाराधयन् आत्मा

अन्ते सकलस्य कर्ममलस्य क्षयं कृत्वा मोक्षपदं प्राप्नोति ।

"पापका मूल लोभ जगमांही" अयं लोभ एवास्ति पापस्य मूलम्, सर्वेषां पापानां मूलम् लोभ. अस्ति, सः विविधः भवति, कश्चनापि लोभश्रित्तस्थः सन् अकार्ये प्रेरयति आत्मानं च मलिनं करोति । धनादेः लोभात् जनाः युद्धादीन् बहून् अनर्थान् कुर्वन्ति इति विदितमेव । कीर्तये अपि केचन बहून् अनर्थान् कुर्वन्ति, तथापि लोभान्धतया स्वदोषं न जानन्ति, प्राय. जगति बहुधा अयम् दोषः व्यावृत्तः अस्ति, अत. कश्चन एव कश्चन उपदिशति भ्रान्तिनिरासार्थम् केवलम्, नि.स्पृहा साधव. एव स्वीयं दोषं जानन्ति, तेषां समयोचितं वचनं लोभितं सन्मार्गे नियोजयन्ति, अत लोभस्य औषधम् प्राप्तुमिच्छुभिः सर्वथा नि.स्पृहाः सेव्या. । उक्तञ्च—

निःस्वो वष्टिशतं शती दशशतं लक्षं सहस्राधिपः, लक्षेश. क्षितिपालतां क्षितिपतिरिन्द्रत्वमाकांक्षति;
इन्द्र सर्वसुरेश्वरः स च सदा ब्रह्मत्वमाकांक्षति, ब्रह्मा विष्णुपदं हरिर्हरपदं लोभो न शान्तिप्रदः ॥ भाषायामपि—

**जो दस वीस पचास भये, शत होइ हजार तु लाख मगेगी; कोटी अरब्ब खरब्ब असंख्य धरापति होनेकी चाह जगेगी ।**
**स्वर्ग—पातालका राज्य करुं तृष्णा अधिकी अति आग लगेगी; सुंदर एक सन्तोष विना शठ ! तेरी भूख कभी न मिटेगी ॥**

"रोग मूल रस दूजा नाही" रसो मूलमेकं रुजो निश्चयेन । रसमूला च व्याधय., सर्वेषां रोगाणां कारणं विषयलोलुपता एव, इन्द्रियाणि स्वस्वविषयेषु अतीवासक्तानि सन्ति, दुःखदानि च भवन्ति, अस्मिन् भवे व्याधिः जायते, परभवे च नरकं जायते, अतः ज्ञानिनः विषयसुखं विषवत् मत्वा विषयान् न सेवन्ते; ये विषयेषु अनासक्ता. ते खलु ज्ञानिनः सन्ति, तेषामनुसरणम् अस्माकं कर्तव्यमस्ति, इति विचार्य विषयेषु अनासक्तिः सेव्या अस्ति ।

"दुःखका मूल स्नेह पिआरे, धन्य पुरुष तेनाथी न्यारे" विना स्नेहमायाति दुःखं न लोके, ऋते स्नेहमास्ते स धन्यो जनोऽत्र । स्नेह-मूलानि दुःखानि, दुःखानां मूलं स्नेहः अस्ति, तन्निर्वाहे कष्टम् भवति, स्नेहे अपि जीव. कदाचित् वञ्चितः भवति, कुपात्रे स्नेहेन उपाधिः भाति । यदि सत्पात्रे स्नेहः जातः तदा तस्य वियोगः मा भवेदिति चिन्ता सदैव भवति । दैववशात् वियोगः भवति चेदतीव तुदति चेतः, अतः व्यावहारिकः स्नेहः सोपाधिकः भवति, यः निरुपाधिकं सुखमिच्छति सः तादृशं स्नेहं मा कुर्यात् तत्र श्रीमानुपाध्यायो वदति—

राग न करजो कोई नर कोईशुं रे, नवि रहेवाय तो करजो मुनिशुं रे,
मणि जेम फणी विषनो तेम तेहोरे, रागतुं भेषज सुयश सनेहो रे ॥

तदर्थः—सोपाधिकाय सुखाय कस्मिन् प्रेम न कार्यम्, यदि रागः इष्टः चेत् तदा सद्गुणसम्पन्ने मुनौ एव उचितः । यथा मणिना सर्प-विषं दूरं गच्छति तथैव मुनौ निःस्वार्थेन प्रेम्णा अप्रशस्तं रागविषं दूरं गच्छति इति सदुपदेशं हृदयंगमं कृत्वा उक्तोपायस्य सेवा समुचिता तथा दृढाभ्यासेन महान् लाभः भाति । ये रागं जित्वा वीतरागा जाताः ते खलु धन्याः सन्ति । रागमुद्दिश्य केनापि कविना कथितमधस्तनं पद्यम्—

प्रेमैव मास्तु यदि चेत्पथिकेन नैव, तेनापि चेद् गुणवता न समं कदापि ।
तेनापि चेद्भवतु भंग इहाथ नैव, भङ्गोऽस्ति चेद्भवतु वश्यमवश्यमायुः ॥

कारणमुपरितनमेव यतः—

स्वच्छमानसेन स्नेहः एव दुर्लभः भवति, चेद् दुर्जनाः सन्ति पदे पदे विघटनार्थम् महत्कष्टं वा पालने तस्य ॥

" अशुचि वस्तु जाणो निज काया " अपूतं स्वकायं सदा ज्ञेयमत्र । अतीव अशुचिः अस्माकं कायः अस्ति तत्र प्रमाणं तु स्त्रीपुरुषयोः

निःसरन्तः दुर्गन्धिनः पदार्थाः, एकः अन्नग्रासः अपि स्वल्पे एव काले दुर्गन्धवान् भवति तर्हि यत्र प्रतिदिनम् अन्नग्रासाः निक्षिप्यन्ते तस्य शरीरस्य कृते किम् वक्तव्यम् ? सा वार्ता श्रीमत्या मल्लिकुमार्या भूतपूर्वं मित्रं राजानं प्रतिबोधयितुं युक्तिभिः प्रतिपादिता । वयमपि स्वीयेन अनुभवेन जानीमः—प्रथमं शरीरम् अशुचि एव उत्पन्नम् अस्ति, पित्रोः स्नेहग्रन्थिः अपत्यम् इति कथ्यते, पुनः वीर्यरुधिराभ्यां जातं शरीरम् अस्ति मात्रा भुक्तानाम् अन्नानां रसः भवति, एवंविधम् अशुचिजातम् अशुचिभिः पदार्थैः परिपुष्टम्, एतच्च पवित्रम् अपि वस्तु अपवित्रं कुर्वदिदं शरीरं जलेन शुद्धं कर्तव्यमिति तु मूढा एव स्वीकुर्वन्ति, तत्त्वज्ञाः तु न स्वीकुर्वन्ति, अस्मिन् अशुचिनि शरीरे कर्मयोगेन व्याप्तं चेतनात्मकं रत्नं युक्त्या पृथक्कृत्वा समतारसेन पवित्रं कार्यम् । ये समतासरसि स्नात्वा पापमलं प्रक्षाल्य पुनः मलिनाः न भवन्ति ते एव आत्मानः शुचयः सन्ति, अस्मात् अशुचेः देहात् आगमयुक्त्या आत्मतत्त्वम् एव मृग्यम् अस्ति, भूयः च जन्ममरणभयेन अलम् ॥

"शुचि पुरुष जे वर्जित माया" विना मायया ना शुचिः सर्वथा हि । यो विगतमोहः सः एव पवित्रः पुरुषः अस्ति, मोहमायादिभिः एव जीवः मलिनं अस्ति, मोहमायादीनाम् औषधम् आत्मज्ञानाऽऽत्मश्रद्धाऽऽत्मस्मरणादिकम् अस्ति, निर्मूलगगनचुम्बिप्रासादवत् ज्ञानतत्त्वश्रद्धारहिता धर्मक्रिया हिता न भवति केवलम् आडम्बरम् एव, अतः आत्मनः उन्नतौ अन्तरायभूतौ मायामोहौ प्रयत्नेन त्याज्यौ, आत्मज्ञानेन आत्मश्रद्धया च प्रयत्नः सफलः भवति, सरलाशयस्य निर्मायिनः एव कल्याणं भवति, यस्य मनसः वचसः कायायाः त्रिविधा प्रवृत्तिः सः एव प्रभोः आज्ञया अविनाशि सुखं साधयति, येषां जन्ममरणादीनाम् अनन्तेभ्यः दुःखेभ्यः भयं स्यात् च निर्भयस्य मोक्षसुखस्य लालसा स्यात् तैः मायावृत्तिः अवश्यं त्याज्या । उदयरत्नः कथयति—**"मुक्ति पुरी जावा तणोजी रे ए मारग छे शुद्ध रे प्राणी ! मा करीश माया लगार."** यथा कज्जलेन चित्रं मलिनं भवति तथा मायया चरितं मलिनं भवति इति ज्ञात्वा आत्मार्थिभिः मोहमायादिकं सर्वथा त्याज्यम् अस्ति ॥

"सुधा समान अध्यातमवाणी" सुधाऽध्यात्मशास्त्रीयवाणी न चान्यः, अध्यात्मशास्त्रस्य उपदेशः अमृततुल्यः अस्ति तेन आत्मनि परमा शान्तिः अनुभूयते, अनुक्रमेण मोक्षसुखं प्राप्तुं शक्यते । आध्यात्मिकः पन्थाः यदुपदिशति तत् आध्यात्मिकं वचनमस्ति येन मनसा जन्मनः हितं भवति, यद्वचनं रागद्वेषरहितस्य प्रभोः अमृतरूपायाः वाण्याः अनुवादकम्, यच्चः क्रियायाः ज्ञानस्य च न पक्षपाति, यद्वचः ज्ञानं क्रियां च पक्षपातेन विना पुष्णाति, यच्चः शुद्धायां क्रियायाम् प्रवर्तयति, तदेव आध्यात्मिकं वचनम् अस्ति, यथा पक्षी पक्षाभ्यामेव उड्डीयते, रथः चक्राभ्याम् एव चलति, न एकेन पक्षेन न एकेन चक्रेण वा, तथा आध्यात्मिकं शुद्धज्ञानं क्रियायाः सम्मेलनेन एव प्रभवति स्वकार्ये, तेन विना आध्यात्मिकं वक्तुं न शक्यते । वस्तुतत्त्वं निविश्य यः स्वहितसाधने प्रवर्तते अहितात् निवर्तते अन्ते स्वकार्यं साधयति ज्ञानस्य क्रियायाः पक्षपाते स्वस्य अहितं भवति; आध्यात्मिकः पन्थाः आत्मकल्याणस्य अमोघः उपायः अस्ति अतः तत्र किमपि कर्तव्यं भवति, आडम्बराय न किन्तु आत्महिताय भवति, ईदृक् ज्ञानवान् अध्यात्मी कथ्यते बुधैः, अस्य विशिष्टं वर्णनं तु अध्यात्मसम्बन्धिभिः उल्लेखैः ज्ञेयम् इति ।

"विष सम कुकथा पापकहाणी" विषं पापकारी कथा विकथापि । नृपादिकथा–देशकथा–स्त्रीकथा–भोजनकथा इत्यादयः कुकथाः प्रसिद्धाः सन्ति चतस्रः, याः कुकथाः न स्वहिताय परहिताय वा निन्दारूपाः पापमूलाः शास्त्रविरुद्धाः कपोलकल्पिताः दुर्गतीनां सम्पादिकाः सन्ति, अतः ताः विषवद् वर्ज्याः हितेच्छुभिः जनैः, विकथाम् वृथा समयच्युतिः न कर्तव्या, परन्तु सुकथासु समययापनं कर्तव्यम्, विकथाभिः प्रमादः आचारशैथिल्यञ्च जायेते, तेन कारणेन जनाः दुःखिनः भवन्ति इति ज्ञात्वा विकथाः त्याज्याः, स्वहिताय प्रयतितव्यम् भव्यमानवैः, निरर्थककथायां क्षणम् अपि न व्ययति किन्तु क्षणात्मकसमयं सदुपयोजयति सः साधीयान् महान् पुरुषः । विकथया साक्षात्कारं विहाय प्रमादस्य जागृतिः भवति, तात्पर्यमिदमत्र विकथाभ्यासः आपद्वारपदम् अतस्ताः विकथाः विहाय सुकथायां मनसः प्रवृत्तिः विधेयेति ॥

"जहाँ बैठा परमारथ लहीये, ताकुं सदाय सुसंगति कहिये"। भवेत्तत्त्वबोधो गतेनाशु यत्र, सतां संगतिः कथ्यते सैव सेव्या। येषां सत्संगत्या सुखं स्यात् सा सत्संगतिः, सैव सेव्या। उक्तञ्च—"शीतल सदा संत सुरपादप," "सदा शीतलः सज्जनः कल्पवृक्षः" यथा कल्पवृक्षमाश्रितः शान्तः भवति तथा साधूनां संगत्या त्रिविध तापः शाम्यति, समाधि अपि भवति, तथाच—'सत्संगति. कथय किं न करोति पुंसाम्, सत्संगत्या के के लाभाः न भवन्ति ?, अपि तु सर्वे भवन्ति, बुद्धे जाड्यं हरति, हिते मनोहारिणि वचसि प्रीति कारयति, प्रतिष्ठां करोति, पापानि दूरीकरोति, एवम् अनेके उत्तमा लाभा सत्संगत्या जायन्ते, दुःसंगति त्याज्या, सत्संगति सर्वथा सेव्या अस्ति, "कीटोऽपि सुमनःसंगादारोहति सतां शिरः।" अत एव पिपीलिका चुम्बति चन्द्रबिम्बमित्युक्तिः संगच्छते कवीनाम् ॥

"जहा गया अपलक्षण आवे, ते तो सदाय कुसंग कहावे" गते यत्र प्राप्तिर्भवेद् दूषणानां कुसंगं बुधैरुच्यते यद्विनाशि। येषां संगतिः दुर्गुणान् जनयति सा दुःसंगतिः, कुसंगेन के के दुर्गुणा न जायन्ते, अपि तु सर्वे एव दुर्गुणाः जायन्ते, अतः कुसंगतिः सर्वथा त्याज्या, एवं ये अनन्यभावेन सत्संगतिं सेवन्ते ते अन्ते मोक्षसुखं प्राप्नुवन्ति इति विचार्य बुधैः दुष्टसंगतिः त्याज्या, एवम् अनुचितानि कार्याणि अपि हेयानि, आत्मनः प्रतिकूलानि न कदापि समाचरेत्, परेषां न समाचरेदिति।

"रंग पतंग दुरजनका नेहा, मध्य धार जे आपत छेहा" खलस्नेहसारः पतगस्य वर्णैः समो यस्तरण्यां क्षिपेदापदायाम्। ये उत्तमपुरुषाणां छिद्राणि पश्यन्ति अन्येषाम् अनिष्ट चिन्तयन्ति तत्र यदि सफलाः तदा हृष्टाः भवन्ति, स्वकीयापकारं विधाय अपि परस्याः व्यक्तेः विनाशाय प्रयतन्ते तत्र यदि असफला तदा प्रतिक्षणं चिन्तातुरा भवन्ति, तादृशः अधमाः जीवाः दुर्जनाः उच्यन्ते। तेषां स्नेहः पतंगवर्णवत् अप्राकृतकः भवति, स्वस्वार्थाय एव प्रेम अन्यत्र प्रदर्शयन्ति अन्यान् सेवावृत्या भजन्ति, इति विविधै उपायैः स्वार्थं साधयन्ति। स्वार्थाय च अन्यान् कूपे सागरे

वा निक्षिपन्ति न लज्जन्ति च, कृष्णसर्पस्य विश्वासाद् अपि एतादृशखलविश्वासः महान् भयङ्करः। विषधरः द्विजिह्वः भवति अपि तु दुर्जनः सहस्रजिह्वः भवति, दुर्जनः विविधैः साधनैः साधून् वञ्चयति, क्लेशयति च तस्य विषमयाभिः प्रपञ्चचक्रोर्मिभिः, साधवः कदापि त्रस्ताः न भवन्ति, ते तु सदा स्वकर्मणि सावधानाः भवन्ति, तेषां चैतन्यं पुनः पुनः जागृतं भवति, दुःखं तु साधूनामिदमेव यत् खलाः वृथा आत्मानम् मलिनं कुर्वन्ति, अन्ते दुर्गतिं प्राप्नुवन्ति, साधुखलयोः सत्ये असत्ये प्रेम्णि विनिगमकम् धवलश्रीपालकुमारयोः चरितमेवोदाहरणम् प्रसिद्धम्। खल-लक्षणं केनापि सुधिया इत्थमभ्यधायि—

कस्त्वं मित्र! खलेश्वरोऽहमिह किं घोरे वने स्थीयते, सिंह–व्याघ्र–महारि–भल्लुकगणैः साध्योऽहमित्याशया।
कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशनात्, प्रत्युत्पन्नधियः प्रविश्य नगरीं सर्वान्निहन्युर्जनान् ॥

प्रसंगात्सज्जनलक्षणमपि श्रूयताम्—

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः, शिरसि निहितभारा नारिकेरा नराणाम्;
ददति परममिष्टं तोयमाजीवनान्ते. नहि कृतमुपकारान् साधवो विस्मरन्ति ॥

"सज्जन स्नेह मजीठीरंग, सं काल जे रहत अभंग" सतां स्नेहसारो हि माञ्जिष्ठरागो भवेद् भंग एवेह नो सर्वदापि। दुर्जनस्य स्नेह. पतंगवर्णवद् अस्वभाविकः, सः स्नेहः कीदृश्यपि निकषसमये विकृतः न भवति, सतां समागमः, गंगाप्रवाहवन्निर्मलः, सतां दृष्टिः सुधामयी, सतां वाणी सर्वदा मधुरा भवति, अतः ते जीवानां बहुधा उपकारकाः, खलानां हितं न भवति, तत्र न तेषां दोषः, किन्तु तेषां स्वदुष्टभाग्येन एव लाभानाम् अभावः। तद्यथा सूर्यः उदेति तदा तस्य प्रकाशः दशसु दिशासु विस्तृतः भवति तदा जगतां कल्याणं च भवति, किन्तु उलूकः न

पश्यति तस्य कृते दिनमपि तमोमयम्, वर्षर्तौ वसन्ते वा सर्वे वृक्षाः पल्लविताः किन्तु करीले न पत्रपुष्पादिशुभागमनं भवति, तत्र दृष्टान्तमिद-मघस्तनं पद्यं कस्यापि कवेः—

पत्रंनैव यदा करीलविटपे दोषो वसन्तस्य किम् ?, नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ?;
वर्षाः नैव पतन्ति चातकमुखे मेघस्य किं दूषणं ?, भाग्येनैव भवन्ति सर्वसुलभाः मात्राः पृथिव्यामिह ॥

तुहिनदीधितिः समुदितः भवति, सर्वाः औषधयः प्रकाशन्ते, किन्तु विरहो विरहाग्निना दह्यते, तत्र सूर्यस्य चन्द्रस्य वा वसन्तस्य कस्य दोषः ? किन्तु तेषां दुर्भाग्यमेवास्ति तथा सज्जनेभ्यो वयं ज्ञानं न प्राप्नुमः तत्र न तेषां दोषः किन्तु अस्माकमेव भाग्यदोषोऽस्ति, सज्जनास्तु अद्वितीयाः सन्ति तेषां जन्म कर्मस्वभावः लोकहिताय एव तेषां वात्सल्यभावः अपि अलौकिकः भवति, नारिकेलसमाकाराः केवलं बाह्यतः कठिनाः दृश्यन्ते किन्तु हृदयमतीव कोमलं भवति। तत्समागमार्हाः वयं भवेमः इत्येव चिन्तनीयमस्ति, क्षुद्रतादिदोषपरिहारेण औदार्य्यादि-गुणस्वीकारेण सर्वमेव भव्यं साधयितुं शक्यते। अथ अस्मासु सज्जनकृपा सर्वदा भवतु इतीदृशी सद्वृत्तिः सर्वदा समेषां प्राणिनां चेतःसु विराजमाना भूयादेवं तासां वृत्तीनां यथेच्छलाभे जनाः सद्भाग्यशालिनः भूयासुः इतिशम्।

नेत्राकाशनभश्शास्त्रमिते (२००६) संवत् सिताश्विने।
पूर्णिमायामगात्पूर्त्तिं, ग्रन्थः प्रश्नोत्तरात्मकः ॥

समाप्ता इयं प्रश्नोत्तर-रत्नमालायाः सरला संस्कृतटीका

## श्री वर्धमान–सत्य–नीति–हर्षसूरि जैन ग्रंथमाला

तरफथी प्रकाशन थयेलां ग्रन्थो

नीचेनां पुस्तको साधु–साध्वी तेमज ज्ञानभंडारोने भेट आपवानां छे.

| | | | |
|---|---|---|---|
| *व्यवहारशुद्धि | ०–४–० | *प्राकृतलक्षण | ०–१–६ |
| *आचारोपदेश | ०–१–६ | *जैनतत्त्वसार टीका | ०–८–० |
| *वाक्यप्रकाश | ०–१–६ | *उपदेश–रत्नमाला | ०–२–० |

एक कोपीथी वधारे कोपी मोकलवामां आवती नथी.

बहारगामथी मंगावनारे पोस्टेज माटे उपर जणावेल किंमतनी टीकीट बीडवी.

श्रीवर्धमान–सत्य–नीति–हर्षसूरि जैन ग्रंथमाला

व्यवस्थापकः–शा. रमणलाल नकरचंद

ठे. दुगारनी पोळ, जैनउपाश्रय, अमदावाद.